॥ ॐ ॥

# श्री सम्यक्त्वशुद्धिविषये आरामनंदन कथा ।

संग्राहकः—मणिविजयजी

श्रीआत्मानन्द-ग्रन्थरत्नमाला-एकविंशतितमं रत्नम् ( २१ )

॥ श्रीजयशेखरसूरिरचितम् ॥

# ॥ श्रीजम्बूस्वामिचरितम् ॥

पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयशिष्याणुश्रीचतुरविजयोपदिष्ट—

सुरतनिवासि-श्रेष्ठि-गुलाबचन्द्रात्मज-दीपचन्द्रपुण्यार्थं तस्यैव द्रव्यसाहाय्येन

प्रकाशयित्री-श्रीआत्मानन्दसभा-भावनगर

इदं पुस्तकं मुम्बय्यां वल्लभदास-त्रिभुवनदास गांधी सेक्रेटरी आत्मानंद जैन सभा भावनगर इत्यनेन निर्णयसागर मुद्रणालये कोलभाटवीथ्यां २३ तमे गृहे वा. रा. घाणेकरद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४३८. आत्मसंवत् १६. विक्रमसंवत् १९६८.

## ॥ प्रस्तावना ॥

इह हि विदितमेतदखिलब्रह्माण्डभाण्डोदरवर्त्तिभव्याङ्गिगणे यच्छुभ्रौदार्यधैर्यादम्भगाम्भीर्यागर्वगरिमाद्यनवगीतगुणगणरत्नाभरणभूषितभूघनानां कक्कुप्कामिनीकमलाकमनीयतामवलोकयितुमिव प्रतिदिशं प्रचलितकीर्त्तिकौमुदीकानां महात्मनां चरित्रं श्रवणपथपान्थतां प्राप्तमपि प्राणिनां प्रणाशयति क्षणेनापि भवकोटाकोटिसंकलितकर्मकश्मलकदम्बकम् । एतदनुसृत्य प्रथमत एव स्वात्मोद्धृतिमभिलष्यद्भिर्महामुनिभिः सङ्गृहीता अञ्चलगच्छभट्टारकश्रीजयशेखरसूरिविनिर्मितस्वोपज्ञोपदेशचिन्तामणीवृत्त्यन्तर्गतकेवलजम्बूकुमारकथानकस्यास्य मूलग्रन्थपृथग्भूतस्यानेके पुस्तकादर्शा दृश्यन्ते, तदिदमैदंयुगीनमन्दमतीनां कथानकपठनपाठनाकर्णनरसिकहृदयानां भव्यसत्त्वानां परोपकृतये भविष्यतीति सफलोममायं शोधनकर्मणि परिश्रमारम्भः । निबन्धेऽस्मिन् निबन्धकारैर्जम्बूकुमारपूर्वभववर्णनादारभ्य स्वजनकजननीसुकुलजातस्वजायाष्टकतज्जनकजननीप्रभवप्रभुप्रभृतिप्रतिबोधदीक्षाग्रहणजम्बूस्वामिनिर्वाणगमनपर्यन्तं सर्वमपि चरित्रं संक्षेपेण निबद्धम् । कथानकस्यास्य निर्माणकालस्तु विक्रमाब्दीयषट्त्रिंशदुत्तरचतुर्दशशततमाब्दीयः, अनन्तरोक्तशताब्द्यामेवोपदेशचिन्तामण्या रचितत्वात्तदन्तर्भूतत्वेनास्य पूर्वोक्त एव काल इति कथने न विरोधापत्तिः। अस्य त्रीणि पुस्तकानि पूज्यपादश्रीमद्विजयानन्दसूरिशिष्यप्रवर्त्तकश्रीमत्कान्तिविजयपादानां पुस्तकसङ्ग्रहादासादितानि, तुरीयं पुनश्छाणीनामकग्रामसङ्घसत्कपुस्तककोशत उपलब्धम् । तेष्वेकं चिरन्तनं सटिप्पणीकम् । तत्पुस्तकाधारेण क्वचित् क्वचित्स्थलेऽस्तक-लिपताऽपि टिप्पणी निवेशिता वरीवृत्यते । एतत्पुस्तकचतुष्काधारेणेदं शोधितमपि च्छद्मस्थानामस्मादृशां दृष्टिदोषेणाक्षरयोजकदोषेण वा सुलभमेव स्खलनम् । अतो यत्र क्वचनाशुद्धिः कृता जाता वा भवेत्तत्र संशोधनीयं मात्सर्यमुत्सृज्य धीधनैरित्यभ्यर्थयते—

सविनयबद्धाञ्जलिः प्रवर्त्तकश्रीमत्कान्तिविजयपादसेवाहेवाकः
**चतुरविजयो मुनिः**
( सुरत )

॥ अर्हम् ॥

॥ श्रीमद्विजयकमलसूरिपादपद्मेभ्यो नमः ॥

॥ श्रीजयशेखरसूरिरचितम् ॥

# ॥ श्रीजम्बूस्वामिचरितम् ॥

देशोऽस्ति मगधनामा, यत्रारामा वहिः पुरे रामाः । तरुणाश्रिताः सुवयसः, सारच्छायाः सदालियुजः ॥ १ ॥ सुग्राम इति ग्रामः, सुग्रामग्रामणीरभूत्तत्र । चित्रं निर्वृतिसुस्थो, वृतिमध्यस्थोऽपि यत्र जनः ॥ २ ॥ परिकलितराष्ट्रकूटान्वयोऽभवद्ग्रामनायकस्तत्र । नाम्ना परिणामेन च, यः ख्यातिं प्रापदार्य इति ॥ ३ ॥ शशिन इव रेवती तस्य वल्लभा चित्रमुदितवृपराशिः । जातौ तयोः सविनयौ, तनयौ भवदत्तभवदेवौ ॥ ४ ॥ अविरहितयोरिह तयोः, सदाचरणशोभयोः समप्रभयोः । शुभयोरुभयोर्न भयोरिव फल्गुन्या अभूद्भेदः ॥ ५ ॥ व्याख्यानगर्जितर्जितदुःसमयः शमितभूरिभवतापः । आगाद्घन इव गगने, सुस्थितगुरुरन्यदा तत्र ॥ ६ ॥ आदत्त तदुपदेशामृतपल्वललुलितगलितचिरतृष्णः । व्रतमापृष्टस्वजनो, भवनिर्वेदेन भवदत्तः ॥ ७ ॥ गुरुचरणाम्बुजभजनादागममकरन्दविन्दुपा-

नरतः । भृङ्ग इव जातरङ्गः, केषु न देशेषु स चचार ॥ ८ ॥ कोऽप्यन्यदा मुनीन्द्रः, सूरीनापृच्छ्य बन्धुवोधाय । ग्रामं जगाम कञ्चन, वञ्चनरहितो नरहितोक्तिः ॥ ९ ॥ तत्कालपाणिपीडनसम्बन्धाद्बन्धुरन्ध इव सम्यक् । न तमायातमवैक्षत, वन्दनदानादि दूरेऽस्तु ॥ १० ॥ वीवाह[1]विहस्ता[2]भिर्वनिताभिरितस्ततो भ्रमन्तीभिः । प्रत्युत तस्य महाव्रतमुद्धृत्योद्धृत्य जर्जरितम् ॥११॥ मोहमहीपतिराज्ये, विजयिनि तत्र स्वबोधशस्त्रस्य । प्रसरमपश्यन् वीक्षां[3]पन्नो ववलेऽथ मुनिवीरः ॥ १२ ॥ निर्व्याजे मुनिराजे, गुरोः पुरस्तात्तथैव जल्पाके । भवदत्तः स्माह हसँस्तारं तारुण्यदुर्ललितः ॥ १३ ॥ यः करपीडनपर्वणि, चारित्रिणमतिथिमग्रजमुपेतम् । नोपालक्षयदपि तं, धिग्बन्धुं वन्ध्यमिव वृक्षम् ॥१४॥ मुनिरपरस्तं प्रोचे, कठिनेनायं न बन्धुनानर्चे[4] । भवतोऽपि बन्धुरेकः, सविवेकस्तावदस्ति गृहे ॥१५॥ साधुषु भक्तिर्बन्धावनुरक्तिस्तस्य भोत्स्यते[5]ऽस्माभिः । शिष्यो भविष्यति यदि, त्वयि चिरमिलिते विगतमोहः ॥१६॥ अभिमानी भवदत्तस्तदा व्यधत्ता[6]श्रवं शृणुत यतयः । गुरवो मगधेषु गता, यदि तदसौ प्रव्रजित एव ॥ १७ ॥ समये मगधजनानामयत्नदीपायितं स गुरुमूचे । पूज्या दत्त सहायं, येनाहं वन्दये बन्धून् ॥१८॥ तेऽप्यूचुरिङ्गितज्ञा, एकोऽपि हि गच्छ वत्स ! तत्र त्वम् । कः सिंहस्य सहायो, वने च गगने च सूर्यस्य ॥१९॥ सोऽचालीदेकोऽप्यथ,

---

१ 'घञ्युपसर्गस्य बहुलम्' ३।२।८ इत्यनेन सूत्रेण वेर्दीर्घत्वम्, एवमग्रेऽपि यत्र यत्र वेर्दीर्घत्वं तत्र तत्रानेनैव सूत्रेण सिद्धिरिति । २ व्याकुलाभिः । ३ विलक्षः सन् । ४ 'आनर्चे' इत्यपि । ५ ज्ञास्यते । ६ प्रतिज्ञाम् ।

॥ १ ॥

शकुनानि प्रतिपदं मृगयमाणः । ग्रामं जगाम सुग्रामनामकं नामकं विपदाम् ॥ २० ॥ पृष्टः स्वजनोदन्तं, ग्राम्यः कश्चिज्जगाद तत्रेति । भाग्याधिकोऽसि मुनिवर !, यदवसरे त्वमिह संप्राप्तः ॥ २१ ॥ भ्राता तव भवदेवः, परिणयते नागिलां कनीमद्य । इभ्यस्य नागदत्तस्य या सुता वासुकीजानेः[1] ॥ २२ ॥ जातशिरःशूलः शूलयेव तद्वार्त्तया श्रुतिं गतया । दध्यौ मुनिरहह परस्य हस्यते यत्तदभ्येति ॥२३॥ किं तत्र गतेन मया, यद्बन्धुर्दारबन्धने पतितः । नूनं स इव हसिष्ये, वलितो मोघाश्रवः[2] श्रवणैः[3] ॥ २४ ॥ एतद्विवाहसूचकमशकुनमपि पथि न किं ममाविरभूत् । यदि वा खेदेनालं, भङ्गुरमनसोऽस्ति नहि सिद्धिः ॥ २५ ॥ तत्र च गच्छामि गतो, मुखरागं बान्धवस्य पश्यामि । हरिरपि न श्रियमापज्जलधिमनालोच्य[6] दूरस्थः ॥ २६ ॥ एवं वितर्कतर्कुं, भ्रमयन् लेभे स्वबन्धुभवनं सः । तत्रागतामतिथिं, तनयं वीक्ष्यातुरौ पितरौ ॥२७॥ केचिज्जजल्पुरात्तेऽपि संयमे मोह एव दुरपोहः । नोचेद्बन्धुविवाहे, कथमयमागादनाहूतः ॥२८॥ केऽप्यूचुरसौ न स्वयमुपयेमे तेन बन्धुवीवाहम् । द्रष्टुमियाय मुनेरपि, कुतुकेनाक्षिप्यते चेतः ॥२९॥ मुनिरथ नमतां तेषां, तारस्वरमाशिषं ददौ धर्म्याम् । आकृष्टिवरत्रामिव, बन्धोर्मोहान्धुमग्नस्य ॥३०॥ पत्रलता निजवध्वाः, कपोलफलके लिखन् कुलस्थित्या । शुश्राव तां श्रुतिसुधां, भवदेवः सौधमध्यस्थः ॥ ३१ ॥

---

१ वासुकीनाम्नी जाया यस्य स तथाभूतस्तस्य । २ निष्फलप्रतिज्ञः । ३ यतिभिः 'श्रमणैः' इत्यपि 'श्रमणः श्रवणोऽपि च' इति हैमनाममालायाः शिलोञ्छे । ४ 'धाऽभूत्' इत्यपि । ५ 'ततो' इत्यपि । ६ 'मनालोक्य' इत्यपि । ७ 'गतो त' इत्यपि । ८ अन्धुः कूपः ।

सम्यगवगम्य वन्धोर्ध्वनिं स नारीनिकुञ्जमध्यगतः । मेघस्येव मयूरो, नरिनर्त्ति स्म प्रमोदेन ॥३२॥ सोऽथ दधावे
वन्धोर्मिलनाय करीव दुर्निवारगतिः । अध्वस्थिता लता इव, वधूसखीः प्रसभमवधूय ॥ ३३ ॥ तेन प्रणयात्प्रणतः,
स्थितये चामन्त्रितो मुनिः स्माह । नाहमिह स्थास्नुरहो, गुरुसविधेऽवश्यगन्तव्यः ॥ ३४ ॥ तत्किमपि मङ्क्षु भैक्षं,
गृहाण निजमनुगृहाण वन्धुजनम् । इत्युक्त्वा मुनिरेनःस्तेनः प्रतिलाभितस्तेन ॥ ३५ ॥ पात्रमदान्मुनिरेकं, सत्यङ्कारं
व्रतस्य तस्य करे । तं प्रस्थितमथ नत्वा, नत्वा ववले कुटुम्बेन ॥ ३६ ॥ क्षणमनुभवतामेतौ, चिरात्समेतौ मिथः
कथारङ्गम् । इत्यागृह्य स्वजनैर्व्यग्रैर्नावालि भवदेवः ॥ ३७ ॥ पात्रकयोगात्पात्रं, तमेव कर्त्तुं मुनिर्मनसि गूढः ।
ग्रामाद्दूरं निन्ये, वन्धुं वाक्पाशकृतवन्धम् ॥ ३८ ॥ पश्येयं सा वापी, यत्रावां चिरमकार्ष्व जलकेलिम् । बाल्ये नौ
कृतरागं, तडागमेतत्तदेव पुरः ॥ ३९ ॥ आस्माकवालचापलसाक्षिणमुपलक्षयस्यमुं वृक्षम् । सरसितरामावाभ्यां,
निष्पल्लविता लता एताः ॥ ४० ॥ एता मुनीश्वरगिरो, लवमात्रं मुदमदुर्न तस्य हृदि । शल्यायते स्म यत्प्रतिपदम-
र्द्धपरिष्कृता वाला ॥ ४१ ॥ त्रिभिर्विशेषकम् ॥ पूर्वं न किंचिदूचे, स्नेहानुचितं ह्रियैव भवदेवः । ह्रीः स्वार्थभ्रंशक-
रीति तामपास्याथ स स्माह ॥ ४२ ॥ बन्धो ! वन्धादहितैर्विहिताद्भयमत्र विद्यतेऽद्य श्वः । मुनिरूचे केयं भीर्भा-
वारिभ्यो भयं दध्याः ॥ ४३ ॥ स स्माह पात्रकमिदं, मदङ्गभङ्गाय भारतो भ्रातः ! । सोऽप्यूचे चिन्तय चिरलब्धं

१ पापचौरः । २ 'रङ्ग' इत्यपि । ३ 'लवमात्रां' इत्यपि । ४ अर्द्धविमण्डिता । ५ अरिभिः ।

दुष्कर्मणां भारम् ॥ ४४ ॥ स जगाद यामि साधो !, न मयाऽस्पृश्यत कदापि भूरियंती[1] । मुनिरवदन्निगदसि किं, भ्रातर्भ्रान्तस्त्रिभुवनेऽपि ॥४५॥ एतज्जन्मापूर्वं, सर्वं वनमित्युदीरयति तस्मिन् । मुनिरूचे संसारे, तत्किं यन्नात्मना दृष्टम् ॥४६॥ एवं मिथः कथारसवशगौ तौ जग्मतुर्गुरूपान्तम्[2] । प्रव्राजयसे किमनुजमिति यतिभिरभाणि भवदत्तः ॥४७॥ गुरुणापि नमन्नूचे, भवदेवः किं व्रतार्थ्यसि स दध्यौ । एकालोचा इव किं, सर्वेऽप्येते सदृशजल्पाः ॥४८॥ मन्ये मुनिषु मनस्वी, मद्व्रतसन्धां व्यधत्त भवदत्तः । सदयो वन्दिग्राहं, जग्राह किमन्यथासौ माम् ॥ ४९ ॥ मा भूदयं मृषावाक्, ततो गुरूक्तं तथेति मेने सः । साधुस्तव सन्धेति, प्राशंसि तदग्रजो यतिभिः ॥ ५० ॥ निःसङ्कोचं लोचं, विधाय परिधाप्य साधुनेपथ्यम् । आसेदुषाग्रजेन समुदेक्षितो दीक्षितो गुरुणा ॥५१॥ अत्रस्थितममुमागत्य तित्यजन्मा व्रतं स्वजनवर्गः । एवमनुज्ञाप्य गुरुं, चचाल सह तेन भवदत्तः ॥५२॥ क्षणमात्रान्मात्रादिस्तत्रागात्तस्य परिजनः सर्वः । नायातौ नस्तनयौ, किमिहेति गुरूनपृच्छच्च ॥५३॥ भवदत्तो भवदेवश्चात्रायातौ तथैव यातौ च । श्रुत्वेति गुरोः सुभटश्च्युतेषुरिव स न्यवर्त्तिष्ट ॥ ५४ ॥ प्रहितैर्दिशि दिशि मनुजैस्तनुजः संशोधितः पितृभ्यां सः । न पुनर्ज्ञातः क्वचिदपि, को वा जानाति वायुगतिम् ॥५५॥ भवदेवो व्रतमचरद्, दुश्चरमपि सोदरोपरोधेन । खाट्[3]चक्रे पुनरनिशं, हृदये सा नागिला तस्य ॥ ५६ ॥ दिवसो ययौ न रजनी, ययौ च रजनी पुनर्न दिवसोऽस्य । अर्द्धा-

---

१ एतावती पृथिवी । २ 'गुरूपान्ते' इत्यपि । ३ खाडिति अव्यक्तानुकरणम् ।

लङ्कृतबालाविरहज्वालावलीढस्य ॥ ५७ ॥ न श्रुतमपि गुरुवचनं, नाधीतमपि श्रुतं विषयवैरि । न गलितमपि तारुण्यं, मदनावेशेन स विवेद ॥ ५८ ॥ समये सौधर्म्माख्यत्रिदिववधूभोगभाजि भवदत्ते । भवदेवेन जजृम्भे, द्विरदेन[1] निरङ्कुशेनेव ॥ ५९ ॥ गुरुवचनज्ञानकुलाभिमानमुख्या गुणाश्चिराद्गढिताः । चित्रं मोहमहान्धौ ररक्षुरेनं[2] न निपतन्तम् ॥ ६० ॥ अगणितगणमर्यादः, स्मरयादःसंकुलश्चचाल मुनिः । उत्खातशीलशैलः, सोऽथ प्रलये पयोधिरिव ॥ ६१ ॥ मोहाज्ञया जरस्यपि, तारुण्योचितविकल्पतल्पस्थः । स जगाम ग्रामं तं, व्रतेन सह मार्गमुलङ्घ्य ॥६२॥ समया ग्रामं क्वचिदपि, जिनचैत्ये मुनिवरो विशश्राम । तत्राजगाम सा नागिला जरत्यैकया[3] युक्ता ॥६३॥ अभ्यर्च्य जिनप्रतिमां, गुरुगौरवतोऽनमन्मुनिं तं सा । सोऽपि परिविस्मृताशीस्तां पित्रोः शुद्धिमप्राक्षीत् ॥ ६४ ॥ सापि स्वपतिं कुशला, कुशलप्रश्नाद्वयोऽनुमानाच्च । तं विज्ञाय बभाषे, तौ वृद्धौ परभवमुपेतौ ॥ ६५ ॥ क्षणमथ दुःखं धृत्वा, साधुः पप्रच्छ नागिलोदन्तम् । कोऽसीति तया पृष्टश्च धृष्टधीः स्पष्टमाचष्ट ॥ ६६ ॥ अहमार्यकरेवत्योस्तनयः सा नागिला च मम दयिता । तां मुक्त्वा व्रतमादां, तदा स्वबन्धूपरोधेन ॥ ६७ ॥ अधुना स्वर्गमुपेयुषि, बन्धौ मुक्त्वा गणं व्रतगुणं च । तोषयितुं तामागां, निशान्त इव पद्मिनीमरुणः ॥ ६८ ॥ लावण्यरससरस्यां, विजयिन्यां प्रेमभाजने तस्मात् । हा! प्रेत इवाविरतं तृषितोऽभवदेव भवदेवः ॥ ६९ ॥ श्रुत्वेति कर्णकटुकं, मुनिवचनं

१ हस्तिना । २ 'एतं' इत्यपि । ३ वृद्धया ।

मनसि नागिला दध्यौ । कथमीदृशोऽपि साधुः, प्राकृत[1] इव वञ्चितो विषयैः ॥ ७० ॥ धिग्मोहस्य विलसितं, यत्पलितैर्द्धवलिताग्रमूर्द्धानः । मदनव्याकुलितहृदो, युवान इव बत विजृम्भन्ते ॥ ७१ ॥ केनोपायेनायं, भग्नमना मुनिवरो मयोद्धार्यः । नहि गजपतिरबलानां, पङ्कनिमग्नः सुखोद्धारः ॥७२॥ अथ तत्सहचारिण्या, वृद्धायाः सूनुरापयौ जवनः । ऊचे च मङ्क्षु पात्रं, किंचित्कुरु निजकरे जननि ! ॥७३॥ अद्येह पर्वदिवसे, कश्चिद्भोजनमदत्त मे श्रीमान् । अन्यो दित्सति भोजनमुपर्यदीनश्च[2] दीनारम् ॥ ७४ ॥ न पुराणाशनपूरित—जठरो भोक्तुं नवं समर्थोऽस्मि । तद्भुक्तमिह वमिष्यामि तच्च[3] भोक्ष्ये पुनः क्षुधितः ॥ ७५ ॥ यतिपतिरिति बालवचो, जुगुप्समानो न्यगादि नागिलया । उक्ते मुनेऽमुनेदृशि, जुगुप्ससे त्वं न चिन्तयसि ॥ ७६ ॥ त्वमपि त्यक्तान् भोगान्, कामयमानो बुभुक्षसे वान्तम् । तदियं हन्त दुराशा, नाशाय भवद्वयस्य तव ॥ ७७ ॥ भूयो भूयः सुलभं, चिन्तामणिरिव न चारुचारित्रम् । तद्विषयचूर्णकक्कते, मा धाक्षीस्त्वमपि चतुरोऽसि ॥ ७८ ॥ चलितं कर्णपटुत्वं, कलितं पलितैः शिरश्च निष्प्रसरम् । गलितं तत्तारुण्यं, स्खलितं तव किं मनश्चरणात् ॥ ७९ ॥ शिवनगरगमनविद्यामनवद्यां साधयन्ति ये दीक्षाम् । किं तेऽवकरकर्करणिं[4], रमणीकायं भजन्ति जडाः ॥ ८० ॥ श्रुत्वेति तदुपदेशानूचेऽसौ साधु साधु बोधस्ते । अधुना धुनाति न मनाग्मनो मनोभूर्[5]मम विरक्तम् ॥ ८१ ॥ इयतीमतीत्य भूमिं, पुनर्यदर्थं समागमं सुदति ! । तां चेत्पश्यामि तदा,

१ पामर इव । २ 'मुपरि ददानश्च' इत्यपि । ३ वान्तम् । ४ कचवरसदृशम् । ५ कामः ।

समाहितः स्वहितमासेवे ॥ ८२ ॥ साऽप्यूचे शृणु साधो !, मुमुचे किल नागिला यदा भवता । हतसर्व्वस्वेव तदा, रुरोद सा रोदसीपूरम् ॥ ८३ ॥ साध्वीभ्यः श्रुततत्त्वा, घनसत्त्वा कर्मवैरिणो हन्तुम् । तेपे तपस्तथा सा, यथाऽजनि म्लानकुसुमसमा ॥८४॥ किं तत्रास्ति विलोक्यं, मयि दृष्टायां च सापि दृष्टैव । देहेन देहिना वा, मम तस्याः कोपि न विशेषः ॥ ८५ ॥ तर्त्किं सैव न भवती, भवतीरस्थेति यतिनि जल्पाके । सापि तथेत्यनुमेने, मुनिरथ लज्जातुरो दध्यौ ॥ ८६ ॥ वैशाखेनेव लतालङ्क्रियते यौवनेन तनुरेषा । क्रियते तरसा जरसा, विच्छाया फाल्गुनेनेव ॥ ८७ ॥ जरया ग्रस्तस्यास्य, प्रकाशधमनिस्वसस्य देहस्य । सङ्गतिरङ्गतिरोहितहृदा मयाऽहारि हा ! चरणम् ॥ ८८ ॥ मुनिरूचे धर्म्मज्ञे !, धुरि मन्येऽहं महासतीषु त्वाम् । या स्वं च मां च रक्षसि, निजाज्ञया कामराक्षसतः ॥८९॥ शोभयति प्रासादं, पताकिका दीपिका तमो हरति । ग्रामं च रक्षति वृतिर्जीवयति जगज्जलदधारा ॥ ९० ॥ तारयति तरी जलधिं, छाया तापं छिनत्ति पथिकानाम् । एवं स्त्रीजातिरपि, प्रबोधदानात्त्वमुपकुरुषे ॥ ९१ ॥ युग्मम् ॥ प्रायः पूर्येत नदी, मेघेन तया न तु क्वचन मेघः । मय्यपि बोधविधानाद्विपरीतं तत्त्वया चक्रे ॥९२॥ भूयान्मिथ्या-दुरितं, मम क्षमस्व व्यलीकमनलीके !। मुनिरित्युक्त्वा मनसा, ववले चारित्रधवलेन ॥ ९३ ॥ आलोच्य गुरोः पुरतः, स्वदुरितमथ तेन तत्तपस्तेने । यदमीमिलदवसाने, सौधर्म्मे सोदरं तस्य ॥ ९४ ॥ इतश्च—वैदेहे पूर्वार्द्धे, समस्ति किल पुष्कलाख्यया विजयः । विश्वप्रियोऽस्ति देशो, नवो निवेशः श्रियां तत्र ॥ ९५ ॥ सरसीव विपुलपद्मा,

तत्रास्ते पुण्डरीकिणी नगरी । निवसन्ति विशदपक्षा, यस्यां वरलाभवच्छ्रीकाः ॥ ९६ ॥ वज्रीव वज्रदत्तस्तस्यां चक्री बभूव भूरिवलः । यस्याढौक्यत समरे, विजयेनाशेषविजयश्रीः ॥ ९७ ॥ तस्याजायत जाया, यशोधरा लक्षसंख्यललनस्य । च्युत्वा भवदत्तात्मा, तस्याः कुक्षाववततार ॥ ९८ ॥ समयेऽसूत सुतं सा, हंसायितममलवंशकमलस्य । नाम्ना सागरदत्तश्चन्द्र इवायं ययौ वृद्धिम् ॥ ९९ ॥ उद्यौवनो नृपसुताः, परःशताः स परिणायितः पित्रा । चिक्रीड सौधमूर्द्धनि, विजिगीषुरिव श्रिया शक्रम् ॥१००॥ विद्युत्पिशङ्गबहुश्रृङ्गसङ्गतं चलमिव त्रिदशशैलम् । सखिभिरिव शिखिभिरुपवननिलयैरालोकितं प्रीत्या ॥ १०१ ॥ असमानमानिनीमानभेदि गगनाध्वरोधसोद्रेकम् । अन्येद्युर्घनपटलं, दूरोन्नतमालुलोके सः ॥ १०२ ॥ युग्मम् ॥ यावज्जलैर्घनोऽयं, प्लावयिता मेदिनीमिति स ऊचे । तावच्चातकपातकनुन्न इव मरुद्ववौ वामः ॥१०३॥ तत्प्रबलतया जलदे, कृषिकजनमनोरथैः सह विलीने । सागरदत्तो व्यमृशच्चपलत्वं सर्वभावानाम् ॥ १०४ ॥ वैराग्येण विमुक्तावरोधरोधः प्रपद्य चारित्रम् । तपसा विघटितकर्म्मा, परिलेभे सोऽवधिज्ञानम् ॥ १०५ ॥ भवदेवोऽपि च्युत्वा, विजये तत्र पुरि वीतशोकायाम् । पद्मरथनृपतिपत्न्या, वनमालाया बभूव सुतः ॥ १०६ ॥ नाम्ना स शिवकुमारो, जनकेन ग्राहितः कलाः सकलाः । उदवाह्यत तारुण्ये, पञ्चशतीं नृपतिकन्यानाम् ॥ १०७ ॥ निजवैभवविभवोचितसंपन्नाऽखिलमनोरथप्रथिमा । रमणीरसानुविद्धः, सौधस्योपरि स चिक्रीड ॥ १०८ ॥ मुनिरपि सागरदत्तो, विचरंस्तत्रान्यदा ययौ नगरे । प्रविवेश च भिक्षार्थं, गृहमि-

भ्यसमृद्धिदत्तस्य ॥ १०९ ॥ तेन प्रासुकभक्तैर्भक्त्या प्रतिलाभिते मुनौ वद्दृषुः । दानद्रुमस्य फलमिव, पाकपिशङ्गं सुराः स्वर्णम् ॥ ११० ॥ तत्साक्षाद्वीक्ष्य शिवः, सौधाग्रस्थः प्रमोदमेदुरितः । भुक्त्वोत्थितं ववन्दे, सानन्दस्तं मुनिमुपेत्य ॥ १११ ॥ मुनिरथ तस्य प्रथयाञ्चकार संसारसागरगुरुत्वम् । तत्तारणक्षमं पुनरर्हद्धर्म्मं सुपोतमिव ॥११२॥ अलपन्नृपभूर्न पुरा, के के विलुलोकिरे मया मुनयः । त्वयि पुनरधिकस्नेहं चेतः को हेतुरिह नेतः !? ॥ ११३ ॥ मम नयने त्वद्वदनालोकनपीयूषपानदुर्ललिते । न चिखेलिषतो योषिन्मुखनगरश्रोतसीदानीम् ॥ ११४ ॥ मुनिरूचे प्राग्जन्मनि, ममानुजोऽभूरितीदृशः स्नेहः । जन्मान्तरेऽपि ऋणवत्प्रायेण प्रेम न त्रुटति ॥ ११५ ॥ अवदच्छिवस्तदानीमदूरयस्त्वं न जातु जनमेनम् । अतिदुर्विनीतमिव किं, सम्प्रति साधो ! पृथक्कुरुषे ? ॥ ११६ ॥ मोहाम्बुधौ सिमङ्क्षुं, मामुदधार्षीस्तदा मुदागत्य । तत्राकण्ठं मग्नं, सम्प्रति किमुपेक्षसे भ्रातः ! ? ॥ ११७ ॥ मुनिरूचे वससि त्वं, राजकुलेऽहं तु गुरुकुले वत्स ! । कथमावयोः प्रसिध्यति, भिन्नस्थानस्थयोः स्नेहः ? ॥ ११८ ॥ यदि पूर्वभवाभ्यस्तां, द्रढयितुमभिलषसि सम्प्रति प्रीतिम् । पित्रोरनुज्ञया तद्, वत्स! समादत्स्व चारित्रम् ॥ ११९ ॥ गत्वा स्वावसथमथ, प्रणम्य पितरौ व्रतं ययाचे सः । तच्छ्रुत्वा तौ मूर्च्छानिमीलिताक्षावधोऽपतताम् ॥ १२० ॥ संजातचेतनौ तौ, जगाद सादरमनाः शिवकुमारः । वाञ्छति महोदयं मयि, कोऽयं पितरौ ! वृथा खेदः ॥ १२१ ॥

१ 'भुक्तो' इत्यपि । २ न क्रीडितुमिच्छतः । ३ मतान्तराश्रयणेन न दवादेशः ।

विषया विषवृक्षसखा, वनिता निरयाध्वदीपिका एताः । श्रीरपि विद्युल्लोला, तत्किं रज्ये भवे येन ? ॥ १२२ ॥
तावूचतुः किमस्मन्मनोरथं वत्स ! सपदि मृद्नासि ? । न क्षणमपि तव विरहं, सहावहे दाव[1]हेतिमिव ॥ १२३ ॥
अनुकूलास्तव वध्वो, राज्यश्रीश्च स्वयंवरा सेयम् । आवां प्रणयप्रह्वौ, कोयमकालेऽभिलाषस्ते ? ॥ १२४ ॥ यद्यज्जगाद
पित्रोः, प्रसादनार्थं शिवोऽथ शिवकामः । तत्तत्तयोर्विलीनं, सन्तप्ते पात्र इव वारि ॥ १२५ ॥ अननुमतोऽथ पितृ-
भ्यां, भोजनमुत्सृज्य मौनधारी सः । तस्थौ पौषधसद्मनि, चक्रीव त्रिदशविजिगीषुः ॥ १२६ ॥ दृढधर्म्माणं श्राव-
कमाकार्य जगाद पद्मरथभूपः । अस्मज्जीवितसौध—भ्रंशे स्तम्भो भवान् भवतु ॥ १२७ ॥ तनयवदनेन्दुवीक्षण—
मुक्ताः प्राणान्न शक्नुमो धर्तुम् । समयज्ञोऽसि तथा कुरु, यथा कुमारोऽचिराद्भुङ्क्ते ॥१२८॥ ओमित्युक्त्वा दृढधी-
र्दृढधर्म्मा शिवकुमारमुपतस्थे[2] । प्रतिचक्रामेर्यामथ, वन्दनकार्थं ययाचे तम् ॥ १२९ ॥ असमञ्जसं तदालोक्य मौन-
मुद्रां विभेद नृपतनयः । किं भाषसे ? विवेकिन् !, वन्दनमर्हन्ति ननु यतयः ॥१३०॥ भावव्रतं तवाप्यस्ति तेन का
न्यूनतेति तेनोक्ते । निजगाद शिवकुमारो, वदसि किमेवं प्रवीणोऽसि ? ॥१३१॥ क्व यतिः परिहृतसङ्गः ? क्व सङ्ग-
कश्मलमतिर्गृहस्थश्च ? । सागरगोष्पदयोरिव, भवति विभेदो महाननयोः ॥ १३२ ॥ न गृही निगृहीतमना, अपि
लभते मुनिवरस्य सादृश्यम् । श्लक्ष्णीकृतोऽपि समितां[3]–समतां किं चिक्कसः[4] स्पृशति ? ॥१३३॥ सुचिरं कामितमपि

१ वनवह्निज्वालामिव । २ 'उपतस्थौ' इत्यपि । ३ गौधूमचूर्णसादृश्यम् । ४ यवचूर्णम् ।

तत्पश्यामि पुनः सखे! भवेऽमुष्मिन्। पूर्वभवानादरतः, प्रकुपितमिव दुर्लभं चरणम् ॥ १३४ ॥ अवदद्दृढधर्म्मोऽदः, सत्यं पितरौ च पुनरनुल्लङ्घ्यौ । तन्मुञ्च कदाग्रहितां, कुरु स्वकार्यं गृहस्थोऽपि ॥ १३५ ॥ भुङ्क्ष्व प्रासुकभक्तेन मृत्युनालं स्वकार्यविघ्नेन। इति तद्वचः स मेने, शिष्टाः प्रायेण नाविष्टाः ॥ १३६ ॥ अथ दृढधर्म्मानीतैः, शुद्धाहारैः सदैव षष्ठान्ते। मुनिरिव चक्रे पारणमाचामाम्लेन सदने सः ॥ १३७ ॥ कुङ्कुमकपिशपरःशत—वनितादीसाग्नि-कुण्डमध्यस्थः। पञ्चाश्यधिकं तन्वंस्तपोऽत्यगाद्द्वादशाब्दीं सः ॥१३८॥ निविडं विडम्बितोऽसौ, प्राच्यभवेऽनेन तेन सेर्ष्य इव। दृढधर्म्मावष्टम्भान्निशुशुम्भ हठेन मदनमसौ ॥ १३९ ॥ इति तपसा पूर्णायुः, पर्यन्ते साधुसाधितान-शनः। पञ्चमसुरलोकेऽभूद्विद्युन्मालीति स त्रिदशः ॥ १४० ॥ चतसृभिरमरवधूभिः, सह रममाणे सुरेऽत्र पञ्चशरः। प्राग्जन्मनि जर्जरितः, पुनः स्वमुज्जीवितं मेने ॥ १४१ ॥ तस्यायुषोऽवसाने, विहरन्मगधेषु वर्द्धमानजिनः। शम-वासः समवासरदुपराजगृहं जगन्नाथः ॥ १४२ ॥ विद्युन्माली नन्तुं, भगवन्तं समवसरणमायातः। त्रिदशातिशा-यितेजा, ददृशे श्रेणिकनरेशेन ॥ १४३ ॥ ईदृक्तेजाः किमसाविति पृष्टः श्रेणिकेन विभुरूचे। च्यवनासत्त्या साम्प्रत-मयमल्पमहा महाभाग! ॥ १४४ ॥ तेपे यदनेन तपः, सुदुस्तपं शिवभवे विदेहेषु। तेनेदमस्य तेजस्त्रपाकरं भास्कर-

१ 'नोच्छिष्टाः' इत्यपि। २ 'हं' इत्यपि। ३ जघान। ४ परिगृहीताभिः आद्यदेवलोकद्वयवासिनीभिरिति संभाव्यते। ५ रूपपरि-चारणाप्रकारेण। ६ अल्पतेजाः।

स्याऽपि ॥ १४५ ॥ क्वोत्पत्स्यते च्युतोऽसाविति पृष्टे भूभुजा पुनर्वीरः । प्रोवाच सप्तमेऽहनि, विपत्स्यते सैष सुरलोकात् ॥ १४६ ॥ ऋषभश्रेष्ठितनूजो, जम्बूनामा भविष्यति पुरेऽत्र । अस्यामवसर्प्पिण्यां, चरमोऽयं केवली ज्ञेयः ॥ १४७ ॥ इति जिनवचसा मुदितस्त्रिपदीं दत्त्वाथ समवसरणस्थः । जम्बूद्वीपाधिपतिः, प्रननर्त्तोनादृतो देवः ॥१४८॥ भूपः पप्रच्छ विभुं, किममरनरपूरितेऽत्र तव सदसि । देवोयमेव नृत्यति, मुद्भिः स्थूलम्भविष्णुरिव ॥१४९॥ अवदत्प्रभुः पुरेऽस्मिन्निभ्योभूद्भूप! चन्द्रगुप्त इति । आस्तां द्वौ तनयौ तस्य ऋषभदत्तश्च जिनदासः ॥ १५० ॥ ऋषभः शुभपरिणामः, श्रीधाम निकामधृतगुणग्रामः । यशसा धवलितभुवनो, वभार भारं कुटुम्बस्य ॥ १५१ ॥ जिनदासः पुनरनिशं, द्यूतव्यसनी पणाङ्गनासक्तः । शरणीचक्रे दोषैरखिलैर्ऋषभादिव त्रस्तैः ॥ १५२ ॥ बन्धुस्नेहेन सदा, हितशिक्षाऽदायि तस्य ऋषभेण । न पुनरवासि तयासौ, रामठमिव चन्दनच्छटया ॥ १५३ ॥ उपदेशानर्हत्वादृषभस्तं स्वजनभूपतिसमक्षम् । निरवासयन्निजगृहाद्भ्रातापि रिपुर्गुणविहीनः ॥ १५४ ॥ अन्येद्युरसौ कितवै रुद्धो लभ्यं धनं मृगयमाणैः । कलहं विदधन्निशितायुधैर्निजघ्ने कृपाहीनैः ॥ १५५ ॥ सोऽथ विरुद्धः कर्मणि, मर्मणि विद्धः क्षितिं द्विधा प्राप । ऋषभस्य दीनवदनो, न्यवेद्यत स्वजनवर्गेण ॥ १५६ ॥ लोकत्रपया कृपया, बन्धुप्रेम्णा तथेरितस्त्वरितम् । तत्राजगाम ऋषभः, क्रन्दन् यत्रास्ति जिनदासः ॥ १५७ ॥ मरणभयाद्गतगर्वस्तं जिनदासो

१ हिङ्गु । २ पृथ्वीं हानिं च ।

जगाद गलदश्रुः । वन्धो ! ममापराधं, क्षमस्व मां विपदि त्रायस्व ॥ १५८ ॥ सोऽपि कृपालुः प्रोचे, भ्रातः ! किं कातरोऽसि ? भव धीरः । नीत्वा निजसदनं त्वामुल्लाघयितास्मि वरवैद्यैः ॥ १५९ ॥ जिनदासस्तमवादीन्ममाधुना नास्ति जीविते गृद्धिः । भ्रातस्तव मुखकमलादहमन्त्याराधनामीहे ॥१६०॥ जातोऽस्मि कुले विमलेऽकरवं कर्म्माणि तानि तान्यनिशम् । स्मृतमात्रैरपि सम्प्रति, यैर्हृदि दहनाधिको दाहः ॥ १६१ ॥ ऋषभोऽभिदधे भ्रातर्द्धन्यस्त्वं यस्य मतिरियं स्फुरति । प्रान्तेऽपि कृतं सुकृतं, फलदं किं धीर! विधुरोऽसि? ॥ १६२ ॥ भुवनाभरणं शरणं, भवन्तु जिनसिद्धसाधुधर्म्मास्ते । अपराधिन्यपि जन्तौ, भज मैत्रीं किमुत शेषेषु ? ॥१६३॥ निन्दस्व पापमखिलं, सम्प्रत्यनुमोदयस्व सच्चरितम् । परमेष्ठिपञ्चकं स्मर, कुरु सर्वाहारपरिहारम् ॥ १६४ ॥ देहेऽपि मुञ्च ममतां, विभावय श्रमणवीरचरितानि । एवं तव शिवलक्ष्मीरपि दूरे नास्ति किमुत द्यौः[3] ? ॥१६५॥ इति वन्धोर्वचनामृतपानाद्यातव्यथामजानानः । साधितमृत्युः सोऽभूदनादृताख्यो महादेवः ॥ १६६ ॥ सोऽयमधुना स्वबन्धोः, सदने सुतरत्नसम्भवं श्रुत्वा । मम निर्मलं कुलमहो, इत्युल्लापान्नरीनर्त्ति ॥ १६७ ॥ अथ नत्वा जिननाथं, मन्वानः स्वं पुरं प्रधानतरम् । सौधं जगाम भूपः, प्रीत्या पश्यन्नृषभगेहम् ॥ १६८ ॥ पूर्वं तत्रैव पुरे, समागतोऽभूत्सुधर्म्मगणनाथः । विममर्श तदा ऋषभस्य वल्लभा धारिणी मनसि ॥ १६९ ॥ तं तं प्रसादमापं, भर्तुरहं न पुनरेकमपि पुत्रम् । चकर

१ पालय । २ स्वस्थीकारयिष्यामि । ३ स्वर्गः ।

च सर्वोपायांस्तदासये तेऽपि न च फेलुः ॥ १७० ॥ सम्प्रति गुरुः सुधर्म्मा, समागमज्जङ्गमः सुरद्रुरिव । तत्तं नमामि कामितसिद्धिः स्याद्येन न चिरेण ॥ १७१ ॥ तनयतरणिं विना सा, विषादतमसार्दितास्यतामरसा । आरू-[1]ढयाप्ययाना, जगाम विपिनं ननाम मुनिम् ॥ १७२ ॥ पप्रच्छ सिद्धपुत्रः, कोऽपि तदानीं प्रणम्य गणनाथम् । शाश्वतजम्बूपादपविचारमेवं च गुरुरूचे ॥ १७३ ॥ उत्तरकुरुपूर्वार्द्धे, शीतासरितश्च पूर्वदिग्भागे । जाम्बूनदमयमग्र्यं, पीठं जम्बूद्रुमस्यास्ति ॥ १७४ ॥ तत्पञ्चयोजनशतान्यायामपृथुत्वयोस्त्रिगुणपरिधि । पिण्डे द्वादशयोजनमन्तः प्रान्ते द्विगव्यूतम् ॥ १७५ ॥ द्विक्रोशोन्नतया पञ्चचापशतविततया मणीमय्या । तदवेष्टि पद्मवेद्या, क्रीडासख्येव देवानाम् ॥१७६॥ द्वारः पीठस्य चतुर्दिशि तोरणकेतुकलशकलशोभाः । द्विक्रोशोच्चा गव्यूतिविस्तृताः शस्तरत्नरुचः ॥१७७॥ जम्ब्वा आसनभूरिव, मध्ये मणिपीठिकास्य पीठस्य । योजनचतुष्कमुच्चा, प्रविस्तृता योजनान्यष्टौ ॥ १७८ ॥ तत्राऽस्ति वज्रवैडूर्यरिष्टमूलप्रकाण्डवरकन्दा । रजतोपरितनशा[2]खा, सुवर्णशाखाप्रशाखौघा ॥ १७९ ॥ वैडूर्यदला तपनीयपत्रा वृन्ता च रत्नपुष्पफला । द्वादशवेदीगुप्ता, जाम्बूनदपल्लवा जम्बूः ॥ १८० ॥ द्विक्रोशनिमग्नायां, भूमौ तस्यां द्वियोजनोच्छ्रायः । द्विक्रोशपृथुस्कन्धः, शाखाश्च चतुर्दिशि चतस्रः ॥ १८१ ॥ एका चोर्ध्वं शाखा, योजन-षट्कोन्नतास्त्युपरि तस्याः । जिनभवनं देशोनक्रोशोच्चतदर्द्धविस्तारम् ॥ १८२ ॥ पूर्वस्यां क्रोशमितं, भवनमनादृत-

---

१ आरूढशिबिका । २ 'शाला' इत्यपि ।

सुरस्य शाखायाम् । भवनप्रमितास्तिसृषु, प्रासादाः शेषशाखासु ॥ १८३ ॥ जम्बूद्रुमेऽष्टयोजनविस्तारौन्नत्यभाजि भूविकृतौ । नीडानीव खगानां, ध्रुवाणि भान्त्यमरभवनानि ॥ १८४ ॥ जम्बूनामष्टोत्तर—शतेन परितस्तदर्द्धमानानाम् । जम्बूरियं परिवृता, गुरुरिव शिष्यैः प्रमाणोनैः ॥ १८५ ॥ वायव्याद्यं दिक्त्रयमथ रुद्धमनादृतस्य देवस्य । सामानिकोचितानां, चतुःसहस्रेण जम्बूनाम् ॥१८६॥ जम्बूः पूर्वस्यां दिशि, चतस्र एवैतदग्रमहिषीणाम् । आन्तरपरिषद्भूणामष्टसहस्राणि चाग्नेय्याम् ॥ १८७ ॥ मध्यमसभोगभोग्यं, दक्षिणदिशि दशसहस्रमेतासाम् । बाह्यसदस्त्रिदशार्हा, नैर्ऋत्यां द्वादशसहस्री ॥ १८८ ॥ तदनीकाधिपतीनां, जम्ब्वः सप्तैव पश्चिमाशायाम् । मुख्यतरौ विज्ञेयौ, द्वैतीयीकः परिरयोऽसौ ॥ १८९ ॥ तनुरक्षकसुरपरिगतजम्बूनां षोडश च सहस्राणि । परितस्तृतीयपरिधौ, त्रयस्तथान्ये परिक्षेपाः ॥ १९० ॥ जम्बूनां द्वात्रिंशल्लक्षाः प्रथमे द्वितीयके परिधौ । चत्वारिंशल्लक्षा, अष्टाग्रास्तास्तृतीये च ॥ १९१ ॥ कोट्येकाविंशतिरपि, लक्षाः पञ्चाशदथ सहस्राणि । विंशत्यधिकं च शतं, शाश्वतजम्बूप्रमाणमिदम् ॥ १९२ ॥ इत्यागमोक्तिमापीय, धारिणी सारणीमिव सुधायाः । लाभान्तरलाभादिव, समधिकतोषा[1] ननाम गुरुम् ॥ १९३ ॥ पृष्टेऽथ सुतोपाये, धारिण्या समयभेदपरिशङ्की । गणभृन्मौनं भेजे, मुख्या यतिनां हि वाग्गुप्तिः ॥ १९४ ॥ निजगाद सिद्धपुत्रो, न सर्वविरता वदन्ति विदुषीदम् । अहमेव ते वदिष्यामि येन देशेन

१ 'तोषं' इत्यपि ।

विरतोऽस्मि ॥१९५॥ आचामाम्लाष्टशतं, कुरु परमेष्ठिस्मृतौ सदा लीना । भावी च तदवसाने, सिंहस्वप्नेन पुत्रस्ते ॥ १९६ ॥ श्रुत्वेति सा प्रमुदिता, स्वसदनमागत्य तत्तपस्तेपे । येनाकृष्ट इवागाद्, विद्युन्माली तदुदरं सः ॥१९७॥ दृष्टे सिंहस्वप्ने, निश्चिक्ये सिद्धसूनुवचनं सा । नास्पृष्टमलयपवनः, प्रत्येति मधूदयं कोऽपि ॥ १९८ ॥ समये सासूत सुतं, मौक्तिकमुरुदीप्तिवंशयष्टिरिव । धारयिता सिद्धिवधूर्मूर्द्धनि यमनन्यरुचिमचिरात् ॥ १९९ ॥ उत्सवपूर्वं पितरौ, जम्बूरिति तस्य नाम चक्राते । जम्बूविचारसमये, तदुपायं यज्जनन्याप ॥ २०० ॥ स ग्राहितः शिशुत्वे, जनकेन कलाः कलागुरोः सकलाः । उद्यौवनो मनोभूरिव मूर्त्तोऽमन्यत न कैस्कैः ॥ २०१ ॥ पद्मावती समुद्रप्रिया, समुद्रश्रियं सुतां सुषुवे । पद्मश्रियं च धनिनः, समुद्रदत्तात्कमलमाला ॥ २०२ ॥ सागरदत्ताद्विजयश्रीजानेरजनि पद्मसेनाख्या । इभ्यात्कुवेरदत्ताज्जयश्रियः कनकसेना च ॥ २०३ ॥ विद्युन्मालिन एता, दयिताः स्वर्गाच्च्युताश्चतस्रोऽपि । प्रेयांससुपासितुमिव, नगरे तत्रैवमवतेरुः ॥ २०४ ॥ अन्यच्च नभःसेनां, कुवेरसेनादसूत कमलवती । कनकश्रियं सुषेणा, कनकरुचं श्रमणदत्ताच्च ॥ २०५ ॥ वारिमतीभ्यसुषेणप्रिया प्रसूता सुतां च कमलवतीम् । जयसेना वसुपालितकान्ता च जयश्रियं नाम ॥ २०६ ॥ एता अष्टौ कन्या, विज्ञातकला अवाप्ततारुण्याः । गुणमणिखनये पितृभिर्ददिरे जम्बूकुमाराय ॥ २०७ ॥ तत्रान्यदा सुगोभिः, क्षोभितभूयस्तमा गभस्तिरिव । गणनायकः सुधर्म्मा, ययौ जगज्जाड्यभेदरतः ॥ २०८ ॥ विनयावनता जनता, घनतापभिदं वने सिषेवे तम् । तत्राजगाम

कामपि, मुदं वहन्नृषभसूनुरपि ॥ २०९ ॥ वदनेन्दूदितदन्तद्युतिभिरकाण्डेपि कौमुदीपर्व्व । सदसि प्रपञ्चयन्निव, ततो ददौ सूरिरुपदेशम् ॥ २१० ॥ अस्त्याशादृढमूलः, कुबोधकन्दः कुसङ्गतिस्कन्धः । विस्तृतकषायशाखा—गणः प्रमादेन पल्लवितः ॥ २११ ॥ व्यसनोरुदलो विषयच्छायाचारितविवेकमिहिरकरः । अयशःकुसुमो दुर्गतिफलश्च संसारविषवृक्षः ॥२१२॥ युग्मम् ॥ जिनशासनकाननगतविचारसुरपादपं न येऽधिगताः । पोषयति मनस्तापं, तेषामेवैप नान्येषाम् ॥२१३॥ एतं विवर्द्धयन्तो, जडा विचेतीभवन्त्यनेनैव । उच्छेद्य एव कुशलैस्तपःकुठारेण तत एषः ॥ २१४ ॥ गुरुवचनमिदं भूयः, सभ्यश्रुतिसारणीः परिस्पृश्य । वापीजलमिव जम्बूहृदालवाले विशश्राम ॥ २१५ ॥ स ततः प्रोचे पितरौ, पृष्ट्वा भगवन् ! व्रतं ग्रहीष्येऽहम् । मा प्रतिबन्धं कार्षीरिति गुरुरपि तमनुमेने च ॥ २१६ ॥ अथ रथमारुह्यासौ, प्रावर्त्तत गन्तुमभिपुरं त्वरितः । आलोकत प्रतोलीं, पुरतो गजवाजिगणरुद्धाम् ॥ २१७ ॥ वेलाविलम्बभीरुस्ततोऽपरं गोपुरं गतस्तत्र । यन्त्रशिलागोलकबाणवृष्टिवैषम्यमद्राक्षीत् ॥ २१८ ॥ अत्र स्थितस्य सहसा, मा भून्मम मृत्युरकृतसुकृतस्य । इति झटिति निवृत्तोऽसौ, पुनर्ययौ गुरुपदोपान्तम् ॥ २१९ ॥ विषयविषण्णः स तदा, प्रसरत्पञ्चशरवारिधेः सेतुम् । सर्वतपसां तपोऽग्र्यं, द्रुतं व्रतं तुर्यमादत्त ॥ २२० ॥ गुरुणो दसाह्वतासौ, रेखामासोऽसि वत्स ! वीरेषु । स्मरसवयसि वयसि मतिः, सहसा समभूदियं यस्य ॥ २२१ ॥ श्रवसोः कस्य न किल चक्रुरेहिरेयाहिरां गुरुवचांसि । यन्मनसि स्थिरवासो, व्यधायि तैस्ते नरा विरलाः ॥ २२२ ॥ सततः

क्षणमपि गुरुपदपङ्कजविरहं तितिक्षितुमशक्तः । पितरावनुज्ञपयितुं, व्रतेच्छुरागान्निजागारम् ॥ २२३ ॥ अश्रुतपूर्वं तस्मात्पितरौ दीक्षाभिलाषमाकर्ण्य । अनधिगतपूर्व्वमाधिं, बिभ्राणौ न्यगदतामेवम् ॥ २२४ ॥ वत्सास्माकमकस्माद्दुर्विनयः कोऽपि किं त्वयाऽलोकि ?। येन स्फुटव्यलीकानिव नः[1] परिमोक्तुकामोऽसि ॥२२५॥ मुक्ता न दहनदाहं, रम्भास्तम्भो न च क्रकचपातम् । नहि मिहिरकरस्पर्शं, विनीत ! नवनीतपिण्डोऽपि ॥२२६॥ भूक्षेपं न दुकूलं, न च तूलं प्रखरवायुवेगं च । जलपूरं न किशलयो, न शङ्खवलयं च घनघातम् ॥ २२७ ॥ दृष्टिर्न मरिचचूर्णं, मृणालसूत्रं न वन्धनमिभस्य । सहते न हि ते देहः, सुकोमलः संय्यमक्लेशम् ॥२२८॥ त्रिभिर्विशेषकम् ॥ जम्बुरुवाच पितरौ, दुर्विनयो न युवयोरभूत्कोऽपि । किन्त्वपराध्यति संसार एव तत्तं मुमुक्षामि ॥ २२९ ॥ मृदुरसि कथं दीक्षासुरीकरिष्यामि ? नेति मे चिन्ता । हन्त ! सहन्ते हेतीर्वपुषानेनैव संमिति[2] भटाः ॥२३०॥ अथ तावूचतुरङ्गज !, यथाऽपृणा वालकेलिः कुतुकं स्वम् । सम्प्रति पूरयसि तथा, स्वकरग्रहकौतुकं किं ना ? ॥ २३१ ॥ तनयं कदा सदारं, सतारमिव चन्द्रमत्र पश्यामः ? । इत्याशालतिकां नः[3], कटुवचनहिमेन किं दहसि ? ॥ २३२ ॥ यद्यसि पित्रोर्भक्तस्तदेतमधुना कदाग्रहं मुञ्च । दृष्टस्वापत्यमुखो, जरसि यथायोग्यमनुतिष्ठेः ॥ २३३ ॥ सोऽथ प्रोचे पितरौ, शीलव्रतमादृतं मया तावत् । न नियमभङ्गश्च भवेत्कुलजानामौचितीं याति ॥ २३४ ॥ भोगैर्भृशमपि भुक्तैः, किं कोऽपि क्वापि

१ अस्मान् । २ युद्धे । ३ अस्माकम् ।

तृप्यति कदापि ? । इति विदुषोरपि युवयोर्ह्रा[1] विषयास्तरलयन्ति मतिम् ॥२३५॥ तदहं युवयोः प्रीत्यै, वासरमेकं विवाहमनुभूय । अपरेद्युरथादास्ये, दीक्षामयमेव मे नियमः ॥ २३६ ॥ श्रुत्वेति दध्यतुस्तौ, जितमावाभ्यां यदेष वक्त्येवम् । स्नेहग्रहिला महिलाश्चौर्यः खलु शीलरत्नस्य ॥ २३७ ॥ स जडो यो नवयौवनवधूवृतो धर्तुमिच्छति ब्रह्म । प्रथमसरित्पूरगतस्तिष्ठति किमपातितः कोऽपि ? ॥ २३८ ॥ अष्टवधूनिगडनियन्त्रितोऽपि तत्प्रेमपाशपतितोऽपि । अस्मासु यामिकेष्विव, यास्यति[2] कथमेष जाग्रत्सु ॥ २३९ ॥ यौवनमिदं धनमिदं, रूपमिदं ताश्च तादृशा[3] वध्वः । एकैकमपि विकाराय किं पुनः समुदयोऽमीषाम् ? ॥ २४० ॥ अथ ताभ्यां मुदिताभ्यामारभ्यत सुतविवाहसामग्री । स्वाभिप्रायं जम्बूरजिज्ञपत् श्वशुरवर्गं च ॥२४१॥ भ्रान्ता इव मूढा इव, तेऽपि तदाकर्ण्य गलिततत्त्वधियः। किमथो विधेयमेवं?, वदन्त औच्यन्त कन्याभिः ॥ २४२ ॥ को जम्बूजैत्रगुणो, जम्बूद्वीपेऽपि जयति पुरुषोऽन्यः ? । तन्नः स एव शरणं, मरणं वा कोऽयमालोचः ? ॥ २४३ ॥ अस्मानद्य स्वपथं, स नयतु तं वा वयं तु नेष्यामः । सभ्यीभूय च यूयं, पश्यत कः केन जीयेत ? ॥ २४४ ॥ अस्ति स तावद्योगी, यावन्नास्माकमागतो विषयम् । तावद् दृढता मदनस्य यावदग्नेः शिखा दूरे ॥ २४५ ॥ विशदोऽपि नागवल्या, मिलितः स्याच्चूर्णकः प्रकटरङ्गः । एतदपि वीक्ष्य ताताः !, कथं तनुध्वं मनसि खेदम् ? ॥ २४६ ॥ श्रुत्वेति ते विवाहव्यतिकरमारेभिरे स्वगेहेषु । आगात्त्वरितं

१ 'ही' इत्यपि । २ 'नश्यति' इत्यपि । ३ तादृशो इति स्यात् ।

॥ १० ॥

लग्नक्षणश्च किल कौतुकेनेव ॥ २४७ ॥ स्नेहेन तदाभ्यङ्गं, ददिरे मदिरेक्षणा वरस्याङ्गे । गुरुवचनवारिभिरयं, मा भेदितरामिति धियेव ॥ २४८ ॥ उद्वर्त्तितश्च पिष्टातकेन ताभी रराज वरराजः । स्वस्य मनसीव वहिरपि, निःस्नेहत्वं ब्रुवाण इव ॥ २४९ ॥ कौसुम्भमथ वसानो, वसनं स वभौ भवे निवासयितुम् । वनिताविसृष्टरागेण सर्वतो दत्तवेष्ट इव ॥ २५० ॥ अङ्गेषु नवसु तिलका, न्यस्तास्तस्याऽवलाभिरजितस्य । स्मरचक्रिणः पुरोगा, इव निधयस्तमभिषेणयतः ॥ २५१ ॥ तर्कुस्थतन्तुभिरथ, स्पृष्टो दध्यौ स तर्कुसूत्रमदः । भ्रमरसमध्यापयिता, मामपि कथमितरलोकमिव ? ॥ २५२ ॥ नैतासां कृतमकृतं, कुर्वाणानां क्षणोऽपि लगतीति । स क्षणतो वनितारब्धवर्णकोद्वर्णको व्यमृशत् ॥ २५३ ॥ क्षालयितुमिवाङ्गस्थं, वैराग्यं तं परःशतैः कलशैः । अस्नपयन्त युवत्यो, गायन्त्योऽनङ्गललितानि ॥२५४॥ जलसङ्गोऽस्यारक्ष्यत, ततो गुरूत्तयैव गन्धकाषाय्या । तावदनङ्गशरा इव, पेतुः कुसुमस्रजोऽस्य हृदि ॥२५५॥ मा भैरहमस्मि समीप एव सौहृदमितीव दर्शयितुम् । शुक्लध्यानं चंदनमिषतस्तस्यालिलिङ्ग वपुः ॥ २५६ ॥ सदशादशयोर्नीरागरक्तयोर्हन्त कीदृशो योगः ? । सदशे सिते परिदधे, तेन स वस्त्रे न पुनरितरे ॥ २५७ ॥ अन्तर्गुरूपदेशैर्वहिराभरणैर्महोमयोऽजनि सः । मोहतमोऽस्मादुचितं, जगाम दूरे हताशमिव ॥ २५८ ॥ आरुह्य चपलतुरगं, निनाय सरलाध्वना वशीकृत्य । स स्वमनश्चपलतरं, वशयितुमभ्यासकारीव ॥ २५९ ॥ स्मरसौहृदेन जेतुं, तमुपेताः सितकरा

१ पक्षे जडसङ्गोऽपि ।

इव सताराः । उपरि वर्मुर्मायूरे, छत्रे मुक्तायुजो मुकुराः ॥ २६० ॥ गीतध्वनिवाद्यध्वनिवनितोलूलुध्वनीनसौ मेने । स्मरसेनाकलकलमिव, ततो विशिष्यावधत्ते स ॥२६१॥ सैष व्रतं ग्रहीष्यत्यस्माभिरपीति शुश्रुवे भगिनि ! । पुनरेतदसंभाव्यं, जगज्जयी जयति यत्कामः ॥ २६२ ॥ मूर्त्या सोऽनेन यथा, जिग्ये ननु जेष्यते तथा स्फूर्त्या । नहि नहि तदनुचरीभिः, को न युवा जीयते स्त्रीभिः ॥ २६३ ॥ इतरेतरतरलदृशः, प्रशमनिमग्नामिवास्य पश्य दृशम् । आलापानित्यशृणोदीक्षकपौरीगणस्य वरः ॥ २६४ ॥ त्रिभिर्विशेषकम् ॥ हृदि बिभ्रदिष्टमर्थं, तमेव विसृजन्ननिष्टमर्थिजने । स विमानमिव मनोरममद्राक्षीन्मण्डपं पुरतः ॥ २६५ ॥ त्यज सम्प्रति दिग्विजयं, यस्ते सहते न नाम सोऽत्राऽस्ति । इत्याह्वयतीव चलाञ्चलकेतुकरेण यः कामम् ॥ २६६ ॥ रागाब्धेर्लहरीयितमितस्ततोरक्तवस्त्रभङ्गीभिः । मदनधनूयितमुच्चैर्द्वारे मणितोरणैर्यत्र ॥ २६७ ॥ विज्ञाय मानुषीभिस्तमजय्यं मेलिता इवाप्सरसः । कामेन यत्र रेजुः, स्तम्भेषु स्वर्णपाञ्चाल्यः ॥ २६८ ॥ यत्रोपेता मुक्ता, अप्यवचूलेषु बन्धनं प्रापुः । चन्द्रोदयेषु सत्स्वपि, ववृधे केषां न मोहतमः ? ॥२६९॥ कुङ्कुमसलिलैः सिक्ता, भूरपि यत्राजनिष्ट रागमयी । तं मण्डपमधिगत्य, द्वारि वरेन्द्रः क्षणं तस्थौ ॥ २७० ॥ पञ्चभिः कुलकम् ॥ मामभ्यर्च्य भवाब्धौ, क्षेमुमना वैरिपाक्षिकी सेयम् । अर्घं ददती सुदती, कापीति वितर्किता तेन ॥ २७१ ॥ दीक्षाक्षराणि विधिना, स्वहस्तलिखितानि मार्ष्टुमिव भाले । त्रिस्तं मथा[3] च

१ अवगणयति स । २ द्रष्टपुरस्त्रीसमूहस्य । ३ मन्थानकेन ।

काचन, परपर्शाचारदम्भेन ॥ २७२ ॥ युगमन्थमुसलहस्तां, तां वीक्ष्य प्रोक्षणक्षणे निरताम् । अयमेव भटो विविधायुधः स्मरस्येति दध्यौ सः ॥ २७३ ॥ अर्प्पयिता स्मरशत्रोरचेतनं मां गले निबध्येयम् । गलविलगितनीरङ्ग्या-कृष्टः स तयेति हृदि मेने ॥ २७४ ॥ सकषायमोहपुटमिव, गर्भाग्निशरावसम्पुटं भित्त्वा । स विवेश मातृभवनं, कर्त्तुमिवान्त्यं नमस्ताभ्यः ॥ २७५ ॥ स्नपितविलिप्तविभूषितदेहाः पूर्वं निवेशितास्तत्र । लोकत्रयसाधारणविधिनिर्म्माणानुचितरूपाः ॥ २७६ ॥ कन्या अनल्परूपाः, ससखीका अष्ट वीक्ष्य सोऽमंस्त । ता एता हि सभेदा, मम कर्म्मप्रकृतयो मूर्त्ताः ॥ २७७ ॥ युग्मम् ॥ नयनशरविसरमवसरमवाप्य गूढं च तासु किरतीषु । स्मरसैन्ये बाला अपि, बत योध्य इतीव स जहास ॥ २७८ ॥ हस्तालेपं विदधे, काचित्तासां निबध्य मदनफलम् । न मनः कथमपि लिम्पति, ममेयमिति तेन न निषिद्धा ॥ २७९ ॥ समये पुरोहितगिरा, स्वकरेण वधूकरानुपादत्त । सकृपः स मोहपङ्के, मग्नास्ता उद्दिधीर्षुरिव ॥ २८० ॥ यद्वा प्रणयिन्यो मयि, जाताश्चेत्तत्कृपोचिता एताः । इति शिवसुखमिव दातुं, स ददौ दक्षिणकरं तासाम् ॥ २८१ ॥ तारामेलकपर्वणि, वधूवरदृशो मिथोऽमिलन्न पुनः । रक्तिं च विरक्तिं च स्वभावसिद्धामसुञ्चन्त ॥ २८२ ॥ मा नेशन्मातृगृहादप्येष स्त्रीविरक्तबुद्धिरिति । शङ्कित इव मङ्क्षु वधूवराञ्चलान् बद्धवान् विप्रः ॥ २८३ ॥ सोऽथ गतो वेदिगृहं, ददर्श कुण्डेऽनलं नवज्वलितम् । तत्स्पर्द्धयेव चेतःकुण्डेऽस्य

१ गोधूलिकलमे । २ मानेशत् मानश्यतु । 'नशेर्नेश् वाऽङि ।४।३।१०२।' इति नेशादेशः । एतच्च हेमाचार्यादिमतेनैव ज्ञेयम् ।

ध्यानमुददीपि ॥ २८४ ॥ परिभोजयन्निजवधूस्ताभिः परिभोजितश्च कंसारम् । किं सारं ? धनयौवनवनितादाविति स विममर्श ॥ २८५ ॥ परितोऽनलं चतस्रः, प्रदक्षिणाः स व्यधाद्वधूसहितः । प्रातः प्रदक्षिणयितुं, गणधरमभ्यासनिरत इव ॥ २८६ ॥ शालकदेश्यः कश्चित्पादाङ्गुष्ठे तदार्षभिं दध्रे । दध्यौ स च चेतयतीव माममयं मोहनिद्रालुम् ॥ २८७ ॥ तत्तस्य धनं दत्त्वा, वित्तं करमोक्षणे श्वशुरदत्तम् । सुत्यजमिदमिति जगृहे, स मुक्तदुस्त्यजवधूहस्तः॥२८८॥ जम्बूकुमारचेतो, धवलत्वोच्छेदनाय धवलौघम्[1] । विषमेव विषस्यौषधमिति नीतिविदो दद्वुः प्रमदाः ॥ २८९ ॥ कृतकृत्यैरिव मुदितैः, स्वजनैः सहितो वधूभिरभिरामम् । जम्बूरथ रथमारुह्य निजगृहद्वारमानेञ्च[2] ॥ २९० ॥ तत्र स मातृपितृभ्यां[3], प्रनर्त्तितो नृत्यति स्म हृष्ट इव । मम पाणिपीडनमहो, व्रतविघ्नो न्यैवृतदद्येति[4] ॥ २९१ ॥ ज्वलदगुरुधूमधूपितमाभरणज्योतिरुपहततमस्कम् । सिंह इव पञ्जरं वासवेश्म स विवेश सकलत्रः ॥ २९२ ॥ तत्रापि स निश्छद्मा, पद्मासनयन्त्रजर्ज्जरितमदनः । नहि जाग्रतोऽस्ति भीरिति, समाधिलीनो जजागार ॥ २९३ ॥ अथ नर्म्मकर्म्मचतुराभिरूचिरे ताः सखीभिरस्य दृशम् । साम्यनिमग्नां पश्यत, वत हारितमेव भवतीभिः ॥ २९४ ॥ नाद्य स्वपिति पतिर्वो, न नर्म्म कुरुते रहः सहास्माभिः । ध्यायति किञ्चिदलक्ष्यं, नवरं शिवरङ्गभूरेषः ॥ २९५ ॥ ता अप्यपवार्योचुः, सखीः खलूक्त्वा[5] हलाः ! प्रियः सोऽयम् । अष्टासु पुरस्कुर्वे, कामिति ननु चिन्तयन्नस्ति ॥ २९६ ॥

१ धवलमङ्गलवृन्दम् । २ जगाम । ३ 'आ द्वन्द्वे' ३।२।३९। इत्याकारान्तादेशाकरणाच्चिन्त्यमिदम् । ४ निवृत्तः । ५ निषेधे क्त्वा ।

अष्टौ वाला अवलाः, पतिताः स्मरसङ्कटे कटुविपाके । मुक्त्वा कथमिव यास्यति, ? सोऽयं धीरेषु धृतरेखः ॥२९७॥
इदमूचे प्रियभक्त्या, नो चेत् कः क्षोभितो न युवतीभिः ? । अमरा अपि यत्पुरतः, कर्मकराः का कथा नृणाम् ?
॥ २९८ ॥ दत्तेऽस्मासु दृशं चेज्जानीमो योगशक्तिमस्य तदा । श्रुत्वेति स तर्जित इव, वीरवरः सावधानोऽभूत्
॥ २९९ ॥ देहे च ददौ दृष्टिं, तासां सौभाग्यमदमपाकर्त्तुम् । आकवरीक्रममेवं, विरक्तधीर्भावयामास ॥ ३०० ॥
आसामेषा कवरी, लहरी धूमस्य वृत्तधवलिम्नः[1] । भाले मृगमदतिलकः, शिवप्रयाणेऽहिरिव कृष्णः ॥ ३०१ ॥ गुण-
मयकीर्त्तिपटस्फाटनाय मन्ये भ्रुवौ च कर्त्तरिके । नयनसमुद्रे तारामिषेण विधिना विषं न्यासि ॥ ३०२ ॥ मुष्टाः[2]
के नाऽक्षजिताः, कपोलफलकेऽत्र कामकितवेन । श्लेष्मप्रणालिके इव, नासारन्ध्रे सदा विवृते ॥ ३०३ ॥ श्रवणे च
चर्मवभ्र्यौ, रदच्छदौ तरुणमीनपलपिण्डौ । अस्थिशकलानि दन्ता, मुखविलकुहरोरगी रसना ॥ ३०४ ॥ स्वस्थित्यै
श्लेष्ममलस्वेदैः कण्ठः कृतत्रिरेखाङ्कः । पञ्चाङ्गुलिपाणिदलौ, वाहू एरण्डशाखाभौ ॥ ३०५ ॥ हृत्पीनस्तनपिटकं,
पट्टति दृढवद्धकञ्चुकस्तत्र । तुच्छस्तु मध्यदेशस्तुच्छत्वं सूचयत्यासाम् ॥ ३०६ ॥ आसां विधिना जठरोद्धृतपल-
पिण्डैः प्रपूरितावूरू । नूपुरनिगडितचरणा, एताः किं ? भ्रमणशीलत्वात् ॥ ३०७ ॥ स्नानं च मलाविलतां, विभूष-
णाली प्रकृत्यशोभनताम् । परिधानं निध्यानां[3]नर्हत्वं वपुषि वक्त्यासाम् ॥ ३०८ ॥ तस्मिन्नेवं ध्यायति, सुसाखिल-

१ सदाचारधवलिम्नः । २ आगमशासनस्यानित्यत्वादत्र इडभावः समाधेयः । ३ निध्यानम्, अवलोकनम् ।

परिजने गृहे तत्र । आगाद्भटशतपञ्चकसहितश्चौरप्रभुः प्रभवः ॥ ३०९ ॥ तालोद्घाटनविद्योद्घटितकपाटो ददावसौ स्वापम् । लोकस्य भूषितस्यावस्वापनविद्यया वीरः ॥ ३१० ॥ यावत्तदलङ्कारांस्तरोः फलानीव गृह्णते चौराः । भो! मा स्पृशत निमन्त्रितजनमिति तावज्जगौ जम्बूः ॥ ३११ ॥ वचसा तेन स्तेनव्राते जाते निरुद्धसर्वाङ्गे । प्रभवः पुरतोऽपश्यज्जाग्रतमृषभेभ्यकुलदीपम् ॥ ३१२ ॥ तं नत्वा चौरपतिर्व्यजिज्ञपन्मम गृहाण विद्ये द्वे । देहि स्तम्भनमन्त्रं, मित्रैकं मा स्म विफलो भूः ॥ ३१३ ॥ जम्बूरप्यवददहो, स्तम्भनविद्यां न वेद साऽवद्याम् । नेच्छामि च ते विद्ये; आदास्ये यद्व्रतं प्रातः ॥ ३१४ ॥ किं कुरुषे चौर्यं त्वं, ? संदिग्धार्थं सुनिश्चितव्यसनम् । इति पृष्टस्तेनोचे, प्रभवः प्रभविष्यदुदयोऽथ ॥ ३१५ ॥ विन्ध्यगिरौ विन्ध्यनृपो, जयपुरनगरेऽस्ति तस्य तनयौ द्वौ । आद्यस्तु तयोः प्रभवः, प्रभुरपरः परमबाहुबलः ॥ ३१६ ॥ दत्ते राज्ञा राज्ये, प्रभवे प्रभवे मयि क्रुधं दधति । नहि केनचिदारचिता, प्रीतिर्वचसापि रुचिरेण ॥ ३१७ ॥ जनकमनापृच्छ्य ततो, विनिर्गतश्चौर्यवृत्तिमारचयम् । स्वापनतालोद्घाटन-विद्ये प्रापं भुवि भ्राम्यन् ॥ ३१८ ॥ अद्येह समायासिषमायासमृते श्रियं परिजिघृक्षुः । त्वयि जाग्रति भवति श्रीः, किं नः पूष्णीव कुमुदानाम् ? ॥ ३१९ ॥ अंह्रिस्थभ्रमरा इव, धनलवलोभाद्वयं भ्रमेम भुवम् । त्वं लब्धं धनमेतन्मुमुक्षसे किं सुधीमुख्य ! ॥ ३२० ॥ दृष्ट्वा चित्रस्त्रियमपि, दृशा पिबामः पिपासयेव वयम् । एताश्च परिजिहीर्षसि, किं वालाः कामशालास्त्वम् ॥ ३२१ ॥ जम्बूरुवाच वाचं, कृतिनोऽयं प्रभव ! कस्तव विमोहः ? । धनवनितादिविला-

सा, रमयन्ति जनं सुखिनमेव ॥ ३२२ ॥ नहि दुःखदावदग्धो, देहेऽपि दधाम्यहं स्पृहां वीर ! । यद्यस्ति कौतुकं तन्निश्शृणु यथा वच्मि निजदुःखम् ॥३२३॥ सार्थं कञ्चन विन्ध्याटव्यां विचरन्तमन्तरा रुरुधुः । चौरा बलात्पलायत, नरस्तदा कोऽपि भयविवशः ॥ ३२४ ॥ रुद्धोऽथ वन्यकरिणा, गन्तुं पदमपि पदान्न शक्तोऽसौ । झम्पां ददौ पुरःस्थे, महावटे[1] गर्त्त इव शशकः ॥ ३२५ ॥ अवटतटविकटवटविटपिनिर्गतामवटमध्यमायाताम् । शाखां दुःखसहायामालिङ्गत् प्रेयसीमिव सः ॥ ३२६ ॥ अपरमिव कूपमजगरमवटतले प्रसृमरास्यमैक्षत सः । कूपाच्च दिक्षु चतसृषु, फणिनः पूत्कुर्व्वतश्चतुरः ॥ ३२७ ॥ आश्रितशाखामूलं, तेन खनन्तौ सितासितावाखू । दृष्टौ दृष्टश्च करी, स एव विस्तारयन् शुण्डाम् ॥ ३२८ ॥ तदलाभान्मत्सरिणा, करिणा परिधूनितेऽथ वटवृक्षे । मधुमण्डादुड्डीनाः, सरघा व्यलगन् वपुषि तस्य ॥ ३२९ ॥ केचिच्च मधुच्छत्रात्पेतुर्मधुबिन्दवो मुखे तस्य । तत्स्वादादापदमपि, तां पुण्यफलामसौ मेने ॥ ३३० ॥ अथ कोऽपि चरन्नभसा, खचरस्तं वीक्ष्य दुःस्थमुदितकृपः । ऊचे यदि वदसि तदा, किञ्चन नगरं नयामि त्वाम् ॥ ३३१ ॥ सोऽप्यूचेऽवशरसनः, पिपतिषुरस्त्येष उपरि मधुबिन्दुः । तत्तं पास्यामि सखे !, वलमानो मां च गृह्णीथाः[2] ॥ ३३२ ॥ खचरोऽथ गतः कृपया, वलितः पुनरपि तथैव तेनोचे । उद्विज्य ततः स ययौ, वद स जडः किमथवा विज्ञः ? ॥ ३३३ ॥ जड एव स यस्तस्यामापदि मधुबिन्दुलोभितो वसति । प्रभवे-

१ महाकूपे । २ 'उपादद्याः' इत्यपि । परं तस्य परस्मैपदित्वे चिन्त्यम् ।

नेति निगदिते, जगाद जम्बूः शृणु सकर्ण! ॥ ३३४ ॥ अटवी भवः स पुरुषः, संसारी मृत्युसिन्धुरारुद्धः । नृभवा-
वटान्तरायुःशाखामालम्बितस्तस्थौ ॥ ३३५ ॥ नरकश्चाजगरोऽधः, क्रोधमुखाः पन्नगाश्च चत्वारः । विलगन्त्यो
वपुषि रुजः, सरघाः सुखघातिकास्तस्य ॥ ३३६ ॥ आयुःशाखाभक्षणदक्षौ पक्षौ सितासितावाखू । विषया मधु-
विन्दव इव, जन्तुं प्रीणन्ति कष्टेऽत्र ॥ ३३७ ॥ ईदृगवस्थं मामुद्दिधीर्षुरागाद्गुरुः खचारीव । तत्त्वं निषेधयसि किं,
न गुरुः पुनरीदृशः सुलभः ॥ ३३८ ॥ धनवनिताभोगविधौ, निर्वचनः प्रोचिवानथ प्रभवः । ईदृक्कथं कुटुम्बं, जहा-
सि पाषाणसमहृदयः॥ ३३९ ॥ केचिदजीवत्स्वजनाः, केचिदभक्ता विरोधिनः स्वजनैः । स्वजनैर्योगः प्रायोऽसुल-
भस्तत्तेन मुच्यन्ते ॥३४०॥ जम्बूरूचे भ्रातर्!, भ्रमता भविना भवेऽत्र सम्बन्धाः । सर्वेऽपि सर्वजीवैरासास्तत्कानुर-
ज्येय ? ॥ ३४१ ॥ ये भुञ्जते सह रमामारम्भभवे तु ढौकिते दुःखे । दूरे स्युः कितवा इव, कः स्वजनेष्वादरस्तेषु
॥ ३४२ ॥ अत्राऽपि विसंवादि, ज्ञातेयं मायिवचनमिव दृष्टम् । यदि भो ! न मन्यसे तज्ज्ञातेयकथानकं वच्मि
॥ ३४३ ॥ अस्त्यत्र पुरी मथुरा, मधुराकृतिभिर्न्यषेवि या कृतिभिः । सेनेव मीनकेतोः, कुबेरसेनात्र गणिकाऽभूत्
॥ ३४४ ॥ सुषुवे कुबेरदत्तं, कुबेरदत्तां च युग्मरूपेण । स्तन्यं चाऽपीप्यत सा, दशाहमकानिषिद्धापि ॥ ३४५ ॥
नहि सफला पणमहिला, श्लाघ्येत कदाचिदिक्षुयष्टिरिव । यौवनसर्वस्वहृतोस्तत्किं ते पुत्रयोः स्नेहः ? ॥ ३४६ ॥

१ 'हृदय !' इत्यपि । २ ज्ञातिसंबन्धः । ३ अपाययत् । ४ दुहिता च पुत्रश्च पुत्रौ तयोः ।

इत्यम्बोक्त्या पुत्रौ, निजनिजनामाङ्कमुद्रया सहितौ । सा निदधौ पेटायां, पेटां च मुमोच यमुनायाम् ॥ ३४७ ॥
॥ युग्मम् ॥ माताऽतः परमनयोस्त्वमेव निहितौ ततस्तवाङ्क इमौ । मा न्यासनिह्नवं सखि!, कार्षीरिति सा जगौ
यमुनाम् ॥ ३४८ ॥ कज्जलकलुषाश्रुभिरम्बु यामुनं शितितरं प्रकुर्व्वाणा । सा न्यवृतद्धृतदुःखा, पेटापि जगाम
सौर्यपुरम् ॥ ३४९ ॥ इभ्यौ सरित्तटस्थौ, तरीमतीर्थागतामिवाकृष्य । तामुद्घाट्य शिशुद्वयमालोक्य विभज्य चाद[1]-
त्ताम् ॥ ३५० ॥ तौ मुद्रागतनाम्ना, विख्याताविभ्ययोस्तयोर्भवने । अतिशैशवौ यथार्हां, अध्यैयातां कलाः सक-
लाः ॥ ३५१ ॥ कालेनाकलितकुलौ, तावेव विवाहितौ मिथस्ताभ्याम् । रममाणौ रतिभवनेऽवातीतरतां युगलि-
धर्म्मम् ॥३५२॥ अन्येद्युरक्षकेलौ, कुवेरदत्तोऽक्षिपन्निजां मुद्राम् । वध्वाः पाणौ सापि च, मुद्रासाम्यं विलोक्योचे
॥ ३५३ ॥ नामाभिधानघाटैरनयोर्ननु मुद्रयोस्तथा समता । मम तापकरं सौदर्यमावयोः प्राणनाथ ! यथा
॥ ३५४ ॥ क्वचिदावामिभ्याभ्यामाभ्यामासौ न चानयोस्तनयौ । एतत्सर्वं सशपथमेतावेवाद्य परिपृच्छ्यौ ॥३५५॥
अथ तौ निजनिजपितरावपृच्छतामवदतां यथावर्त्तौ[2] । निश्चितसोदरभावौ, निनिन्दतुः स्वं ततो दुरितम् ॥ ३५६ ॥
संसारे पशुधर्मो, मनुजानामपि भवेद्विना ज्ञानम् । इत्यज्ञानविरक्ता, कुबेरमापृच्छ्य पितरौ च ॥ ३५७ ॥ दीक्षामा-
दत्त मुदा, कुबेरदत्ताङ्गुलीयकं तच्च । जगृहे सहैव गुप्तं, बन्धोर्बोधद्रुबीजमिव ॥३५८॥(युग्मम्) व्यवसायेन धनायन्[3],

---

१ अत्र आङो दः परस्मैपद चिन्त्यमेवमन्यत्रापि ज्ञेयम् । २ 'यथावार्त्तौ' इत्यपि । ३ 'क्षुत्तृड्गर्धेऽशनायोदन्यधनायम् ।४।३।११३।' इति गर्धे क्यन्नन्तो निपातः।

कुवेरदत्तो जगाम मथुरायाम् । काले गलितविरागः, पुरुषाः प्रायेण कठिनहृदः ॥ ३५९ ॥ तत्राभिगम्य जननीं, कुवेरसेनां गभस्तिरिव पूर्वाम् । दधदधिकं रागमसौ, सत्यापयति स्म कौलमतम् ॥ ३६० ॥ फलमिव भवविषवल्लेः, कृमिरिव दुरपोहमोहपङ्कस्य । पल्लव इव पापतरोः, क्रमेण जज्ञे तयोस्तनयः ॥ ३६१ ॥ विज्ञाय तदसमञ्जसमवधि-ज्ञानात्तपोधना साथि । मथुराममन्थरगतिर्महत्तरानुज्ञया प्राप ॥ ३६२ ॥ तस्थौ वेश्यावेश्मनि, कषोपले सा सुवर्ण-रेखेव । तं वालं पालनकस्थितं रुदन्तं जगादेति ॥ ३६३ ॥ [1]मम पतिसोदरदेवर रे वद किं रोदिषि ? वाल ! । एकोदरसञ्जात इति भ्रातर्भालविशाल ! ॥ ३६४ ॥ मम च सपत्न्या जात इति त्वं तनयोऽपि ममासि । अजनि सपत्न्या मम जनकस्तव पौत्रस्तेनासि ॥ ३६५ ॥ मज्जननीप्रियसोदर हे ! त्वं मम भवसि पितृव्यः । त्वं मम सोदर-तनय इति भ्रातृव्योऽप्यसि भव्यः ॥ ३६६ ॥ तव माता मातैव मम नहि सुन्दर संशीतिः । पितामही सा मम जननीप्राणप्रियजननीति ॥ ३६७ ॥ श्वश्रूरपि सा मम सुमते ! मत्प्रियजननी येन । मम च सपत्नीसुतदयिता साथ वधूरपि तेन ॥ ३६८ ॥ अजनि जनी मद्भ्रातुरिति, [2]प्रजावती मम सा तु । मम पतिदयिता सम्प्रति यत्तेन सपत्न्यपि भातु ॥ ३६९ ॥ पितामहो मे स तव पिता, त्वं मम येन पितृव्यः । मज्जननीपतिरिति विदितः स मम पिता भणितव्यः ॥ ३७० ॥ मम तस्य च न पृथग् जननी तेन स वन्धुरमायः । मत्पतिमातुः पतिरिति स श्वशुरो

१ इतः परं नव पद्यानि पद्धडिकाच्छन्दसा ज्ञेयानि । २ भ्रातृजाया ।

मे निरपायः ॥ ३७१ ॥ मत्करपीडनपाटवतः स ममाजनि भर्त्तापि । स मम सपत्न्या ननु तनयस्तनयस्तेन ममापि ॥ ३७२ ॥ श्रुत्वेति कुवेरस्तामूचे किं साध्वि ! विसदृशं वदसि ? । यदि वा किमुच्यते ते, या त्वं गणिकागृहे वससि ? ॥ ३७३ ॥ पश्यसि परस्य दोषं, स्वं च विचिन्तयसि न पुनरित्युक्ता । सापि ततस्तस्य करे, तदार्पयन्मुद्रिकारत्नम् ॥ ३७४ ॥ मुद्रारत्ने वासररत्न इवालोकिते विलीनतमाः । स्वस्य निनिन्द स मोहोपज्ञं पुण्याध्वनो भ्रंशम् ॥ ३७५ ॥ त्रपमाणः स्वचरित्रेण पापशुद्ध्यै गृहीतचारित्रः । धीमान् कुवेरदत्तो, ययौ वनं यौवनस्थोऽपि ॥३७६॥ जगृहे गृहिणां धर्म्मं, विप्लवभीता कुवेरसेनापि । प्रभवेदृशि संसारे, ज्ञातेयकथा वृथा सुधियाम् ॥ ३७७ ॥ प्रभवः प्रोचे प्रभवो, भवन्त एवात्र वच्मि पुनरेषः । यूयं तावदपुत्राः, कथं गतिः स्यादपुत्राणाम् ? ॥ ३७८ ॥ जम्बूरुवाच पुत्रा, गतिमूलमहं तु गतिविरक्तोऽस्मि । यदि पुत्रैः सुगतिः स्यादस्तु तदा कुकुरादीनाम् ॥ ३७९ ॥ कालविवर्त्तेन सुता, अपि शत्रुत्वेन पर्यवस्यन्ति । यदि न प्रत्येषि तदा, वदामि ते सुतकथां प्रभव ! ॥ ३८० ॥ अत्रास्ति ताम्रलिप्ती, पुरी परीता धनाढ्यलोकेन । तत्र महेश्वरदत्तो, वभूव मिथ्यामतिः श्रेष्ठी ॥ ३८१ ॥ कुमतिसरित्पूरप्लुतशीलतटा नागिला वधूस्तस्य । धावति निरङ्कुश इव, प्रतिपुरुषं यन्मनोद्विरदः ॥ ३८२ ॥ स श्राद्धपर्व्वणि पितुः, कदापि महिषं निहत्य तत्पिशितैः । अङ्कस्थं निजमङ्गजमभोजयत्प्रीतिविस्मेरः ॥३८३॥ तत्रायातः कश्चन, ऋषिर्वभाषे तदा पितुः पिशितैः । द्विषमङ्कस्थं पुष्णन्नहो ? जडः श्राद्धमाधत्ते ॥ ३८४ ॥ इत्युक्त्वाऽवलत यतिस्तच्छ्रुत्वा

सोऽपि कोपतो दध्यौ । मलदिग्धवपुः श्रमणो, मलीमसं कीदृशं वक्ति ॥ ३८५ ॥ यद्वा कोपेन कृतं, पृच्छयः पर-
मार्थमेष एव मया । इति मुनिमभ्येत्य जगाविभ्यः किमिदं वदसि ? साधो ! ॥ ३८६ ॥ तं च प्रबुबोधयिषुः,
प्रोचे करुणाखनिर्मुनिवरोऽपि। सुन्दर ! कुर्व्वन्ति न किं, जीवा मिथ्यात्वहतमनसः ? ॥ ३८७ ॥ अवधीरवधीरि-
तभीर्यस्त्वमुपपतिं पुरा स्वदयितायाः । स च तत्कुक्षौ तत्क्षणमुक्तेऽवततार निजवीर्ये ॥ ३८८ ॥ जातः स्वक्षेत्रज
इति, सोऽयं मेने त्वया स्व एव सुतः । यश्चाद्य हतो महिषः, समुद्रदत्तः स ते जनकः ॥ ३८९ ॥ महिषास्थिभक्ष-
णरता, येयं द्वारे शुनीमिमां विद्धि । वहलाख्यां निजजननीमार्त्तिवशात्पशुभवमुपेताम् ॥ ३९० ॥ ज्ञानेनैतज्ज्ञात्वा,
तव बोधायागमं न भैक्षाय । जलदानामिव यतिनां, प्रवृत्तिरन्योपकारफला ॥ ३९१ ॥ प्रत्येषि न चेदेतत्तदिमां
सरमां नय स्वसौधान्तः । दर्शयिता प्राग्निहितं, तव धनमेषा निमेषार्द्धात् ॥ ३९२ ॥ तेन ततः सा सरमा, परमा-
द्भुतशालिना गृहं नीता । प्राचीकटद्भुवि धनं, विवेकरत्नं च तन्मनसि ॥ ३९३ ॥ नैर्ग्रन्थीभिरथासौ, कथाप्रथाभि-
स्तथाभवज्जैनः । न यथा सुरासुरैरपि, धर्माद्भ्रश्येत मेरुरिव ॥ ३९४ ॥ एवं गहनेऽत्र भवे, न सुतैर्जनको न तेन ते
चापि । प्राप्येरन् गतिमनघां, किन्तु स्वकृतेन सुकृतेन ॥ ३९५ ॥ ऊचेऽथ किञ्चिदवनतमुखी सखीप्रेरिता समुद्र-
श्रीः । बाललनासमुचितः, कदाग्रहस्ते प्रभो ! कोऽयम् ॥३९६॥ क्वेदं सुरभवनसखं, गृहिणां वनिताधनोपभोगसु-
खम् ? । कण्टकशाखामर्द्दनतुलितं व्रतिनां क्व चारित्रम् ? ॥ ३९७ ॥ प्रातः प्रदीपकरणं, मन्त्रजपादौ विसर्ज्जनावा-

क्यम् । सुतजन्मनीव जलदानमनुचितं यौवने हि तपः ॥ ३९८ ॥ अपराधः कोऽस्माकं, येन सदा स्मरसि मुक्तिमेवैकाम् । तां बहुरतामरूपामगुणामपि मन्यसे पश्चात् ॥ ३९९ ॥ तामपि लभसे क्रमशः, शंसन्ति क्वापि न त्वरां चतुराः । राभसिकः खलु पुरुषो, विषीदति यथा कुटुम्बी सः ॥ ४०० ॥ ग्रामे सुसीमनामनि, बभूव कौटुम्बिको जडः कोऽपि । प्रावृषि वपति स्म स कङ्गुकोद्रवप्रायधान्यानि ॥४०१॥ तस्यानन्देन सहोदितेषु धान्येषु जलदसिक्तेषु । स्वजनदिदृक्षुर्मालवभुवि स ययौ पूरणग्रामम् ॥ ४०२ ॥ तत्र घृतखण्डमण्डितमण्डकनिवहं सुभोजितः स्वजनैः । दुर्जग्धिदग्धजठराय स स्वदेशाय शपति स्म ॥ ४०३ ॥ तुन्दं[1] स्पृशन्नथोचे, स स्वजनान् यूयमेव भो ! धन्याः । खर्व्वीकृतामृतरसं, नित्यमिदं भोजनं येषाम् ॥ ४०४ ॥ तद्दत्त खण्डमण्डकबीजं वितनोम्यहं स्वदेशेऽपि । तेऽपि ततस्तस्य ददुः, स्वमिक्षुगोधूमयोर्बीजम् ॥ ४०५ ॥ ज्ञपितश्च सादरं तैरिक्षुक्षेत्रारघट्टकर्मापि । कल्लोलयन् कदाशा[2], वलितः स्वग्राममाप मुदा ॥ ४०६ ॥ स निवारितोऽपि तोकैर्लोकैश्च[3] सुजातकल्पमपि धान्यम् । मण्डकरसविवशात्मा, लुलाव सद्योऽपराधीव ॥ ४०७ ॥ तत्र स्थूलस्थलभुवि, स प्राच्यधनेन कूपमारेभे । नाविरभूत्तत्र जलं, किन्तु दृशोरेव तद्भूयः ॥ ४०८ ॥ मूढो मण्डकगृद्ध्या, यथा लुनानः करस्थमन्नं सः । तेभ्यस्तस्मादपि च भ्रष्टः परिहस्यते स्म जनैः ॥ ४०९ ॥ त्वमपि तथा मुक्तिकृते, सुखेषु समुपस्थितेषु सद्वेषः । उभयभ्रष्टो भूत्वा, यास्यसि जनहास्यतां

१ उदरम् । क्वचित्तु 'प्रमुद' इति पाठः, तत्र प्रहर्षं स्पृशन्दवत् इत्यर्थो ज्ञेयः । २ 'कदाशाम्' इत्यपि । ३ अपत्यैः ।

नाथ ! ॥४१०॥ जम्बूः कम्बूदारध्वनिरध्वनि निर्वृतेः प्रवेशयितुम्। तामूचे तव चक्रे, वाचामाचार्यकं केन ? ॥४११॥
शृणु गेहिनां सुखं यत्, तज्जन्मजराधिरोगमृत्युहतम्। विषमिश्रमिव सितोदकमग्राह्यं हन्त हितकामैः ॥ ४१२ ॥
यद् यतिनां व्रतदुःखं, तच्च शुभोदर्कमिति न गणयामः। नहि फलति दुःखभीरोर्व्यवसायं कृषिप्रमुखमखिलम्
॥ ४१३ ॥ पृथ्वीपतिप्रसादे, धनार्जने वा निधानलाभे वा। किं कालमकालं वा, कुशलाः कलयन्ति धर्मे च ?
॥ ४१४ ॥ अस्तु शिवश्रीर्यादृक्तादृग् यदि मानिता महापुरुषैः। मान्या ममापि तदसौ, पन्था हि महाजनक्षुण्णः
॥ ४१५ ॥ सप्रमदाः प्रमदानां, ये सेवन्ते वपुः सुरूपमिति। ते जीवितादवश्यं, भ्रश्यन्ति यथा स काकोलः[1]
॥ ४१६ ॥ लघुरिव विन्ध्यो विन्ध्याटव्यामासीज्जरी करी कोऽपि। ग्रीष्मे लूकाभिहतो, रेवातीरे व्यपद्यत[2] सः
॥ ४१७ ॥ तं प्राप्याक्षयनिधिमिव, मुदमधिकामादधौ शृगालकुलम्। चक्रे च पलाकपैरपावृतं तद्गुदद्वारम् ॥४१८॥
गजदेहे निर्जीवे, तेन द्वारेण कोटिशः करटाः[3]। विविशुर्निरगुश्च दिवा, चौरा निर्नाथ इव नगरे ॥ ४१९ ॥ एवं तेषु
गतागतकारिषु कोपि ध्वाङ्क्षोऽधिकं गृद्धः। तस्थौ तत्रैव स्थिरमन्तर्गतमांसनिघसरसः[5] ॥ ४२० ॥ तस्मिन्नथ मध्यस्थे,
मिलिते ग्रीष्मातपैर्गुदद्वारे। आगाद्वर्षाकालः, काकोलस्यास्य काल इव ॥ ४२१ ॥ प्रथमघनवृष्टिवर्द्धितपूरमदा
नर्मदा करटिनं[6] तम्। उपलमिव वारिराशौ, वीचीनिचयैर्निचिक्षेप ॥ ४२२ ॥ स्वकलत्रनर्म्मदानुगकरिदेहविडम्बकं

१ काकः। २ अम्रियत। ३ काकाः। ४ काकः। ५ निघसो भक्षणम्। ६ हस्तिनम्।

रुपेवाब्धिः । निरसारयद्विकं तं, विवृत्य सलिलैर्गुदद्वारम् ॥ ४२३ ॥ निःसृत्य वायसः प्रतिदिशं दृशं निक्षिपन्निरैक्षिष्ट । जलमयमिव जगदखिलं, ततोऽमुचज्जीवितव्याशाम् ॥ ४२४ ॥ क्षणमुड्डीय निराशो, निवृत्य तस्थौ पुनः स तत्रैव । पश्यत एवास्याब्धौ, तत्कुणपममज्जि लहरीभिः ॥ ४२५ ॥ सोऽपि तदाधारत्वान्निममज्ज सहैव दैवपरतन्त्रः । स्त्रीतनुगृद्धस्तद्वन्नाहं मङ्क्ष्यामि भवजलधौ ॥ ४२६ ॥ पद्मश्रीरवददथ श्रेयांल्लोभो न मुक्तिविषयोऽपि । सर्वापदापगानां, प्राहुर्लोभं महाशैलम् ॥ ४२७ ॥ अधिकाधिकलोभकृतः, कृतिन् ! नरा हारयन्ति मूलमपि । तल्लोभगदमहौषधमाकर्णय वानरस्य कथाम् ॥ ४२८ ॥ अस्त्यापगा त्रिपथगा, विकासिनालीकनयनमालाभिः । या पश्यतीव केलीकलहं कलहंसमिथुनानाम् ॥ ४२९ ॥ वानरमिथुनं तत्राभवदाभवबद्धरागमन्योन्यम् । कृतरति सरितो विपिने, घनवानीरेऽथवा नीरे ॥ ४३० ॥ आरुह्य तीरवेतसमेकं निपपात वानरोऽन्येद्युः । हित्वा सविकल्पनरत्वमयमभून्निर्विकल्पनरः ॥ ४३१ ॥ तीर्थस्यास्य महिम्ना, मम भर्ता वानरो नरो जातः । इति तस्माद्वानीरात्पतिताऽऽसीद्वानरी नारी ॥ ४३२ ॥ रेमे चिरं वनान्तस्तदयोनीसम्भवं मनुजयुग्मम् । दृष्ट्वा तमेव वेतसमूचे वानरनरोऽन्येद्युः ॥ ४३३ ॥ एष नरतां पशोर्महिममञ्जुलो वञ्जुलो यथा दत्ते । दास्यति तथा नराणां, दयिते ! देवत्वमपि मन्ये ॥ ४३४ ॥ एहि पुनर्वानीरादतो निपत्यामरौ भवेवावाम् । न नराणां हि सुराणामिव दृष्टं कामचारसुखम् ॥ ४३५ ॥ 'मनुजत्वेऽपि न्यूनं, किमस्ति लोभो भृशं न च क्रियते' । इति वारितस्तया तां, कातरहृदयेत्यवगणय्य ॥ ४३६ ॥ झम्पां स ददौ

तस्माद्वानीराद्वानरत्वमेवाप । दुःखेन तेन पतितः, पुनर्नरत्वाय न नरोऽभूत् ॥ ४३७ ॥ युग्मम् ॥ मानुषतां मोचयितुं, चाटूनि चिरं चकार स च तस्याः । न तथा तया वितेने, कः प्राप्तं त्यजति जात्यमणिम्? ॥ ४३८ ॥ स्मरविरहितरतिरिव सा, गाङ्गे पुलिने कदापि खेलन्ती । ददृशे भूपनरैस्तैरादायादायि भूपाय ॥ ४३९ ॥ पिण्डितमिव लावण्यं, संचितमिव सकलसुन्दरीसारम् । तां हस्तिनागपुरपतिरन्तःपुरिकेश्वरीं चक्रे ॥ ४४० ॥ कपिरपि केनापि धृतो, नरेण नृत्यं च शिक्षितः स तथा । तत्कलया विवशोऽस्मै, यथा जनोऽदत्त भूरिधनम् ॥ ४४१ ॥ आगात्तदेव नगरं, स नरः स्वकवानरस्य नृत्ये(त्ते)न । विस्माययन् धनाढ्यान्, जगाम भूमीभुजः सदसि ॥ ४४२ ॥ तत्र न ननर्त्त दुर्नट, इव स कपिस्तेन नर्त्तितोऽपि भृशम् । राज्ञा समासनस्थां, तां राज्ञीं वीक्ष्य पुनररुदत् ॥ ४४३ ॥ रणभुवि भट इव तुरगे, प्रतिकूले वानरे नृपसभायाम् । विषसाद यदा भिक्षुर्मङ्क्षु तदा राजदयितोचे ॥ ४४४ ॥ यो भवति यथा कालस्तं च तथा वानरेन्द्र ! सेवस्व । किं वञ्जुलतरुपतितः, पुनः पुनः स्मरसि मानुष्यम्? ॥ ४४५ ॥ राज्ञ्येति बोधितोऽसौ, राजानमरञ्जयन्ननृत्य कपिः । दत्त्वा सोऽपीष्टधनं, सवानरं तं नरं व्यसृजत् ॥ ४४६ ॥ पप्रच्छ नृपो राज्ञीं, कोऽयं मन्त्रस्त्वया प्रिये ! पठितः । येनैष कपिरनृत्यत्ततो जगौ सा निजं चरितम् ॥ ४४७ ॥ अथ राजाधिकलोभं, दूषणमपि तस्य गुणमिवामंस्त । नहि मनुजे सति तस्मिन्नभविष्यदमुष्य दयिता सा ॥ ४४८ ॥ वानर इव भववासोचितं सुखं प्राप्य निर्वृतिसुखेच्छुः । मूलादपि मा स्म पतस्तव हितकामा वयं वच्मः ॥ ४४९ ॥ जम्बूरुवाच

वाग्मिनि !, सन्तः शंसन्ति लोभमपि धर्मे । यन्मुक्तिकामनं खलु, तदौषधं लोभरोगस्य ॥ ४५० ॥ यो जातमोहनिद्रः, प्रमद्वरः शिवसुखाय न यतेत । स भ्रष्टमनुजजन्मा, शोचति किल पुण्यसार इव ॥ ४५१ ॥ भोगपुरमस्ति नगरं, गृहनिवहरमापमानितविमानम् । तत्र विपरीतनामा, कुलपुत्रः पुण्यसारोऽभूत् ॥ ४५२ ॥ पितरौ यद्भरणभयाक्रान्ताविव शैशवे विपेदाते । यो मातुलैरवर्द्ध्यत, जनलज्जातो न च स्नेहात् ॥ ४५३ ॥ तैरेव च व्यवाह्यत, शीलवतीं कन्यकां तदनुरूपाम् । वृत्तिं प्राप तदौकसि, सदा सदारः स दास्येन ॥ ४५४ ॥ सन्ति मणयः सुघृणयो, विविधा वारां निधाविति श्रुत्वा । गोष्ठ्यां क्वचन स मूर्खो, हर्षोत्कर्षाज्जगादेति ॥ ४५५ ॥ यद्यचिरेण पयोनिधिमुदस्य न च सञ्चिनोमि मणिनिचयम् । तदहं निरहङ्कारो, वक्तव्यः पापसार इति ॥ ४५६ ॥ अथ स निषिद्धः पत्या, तां प्रोचे किं विषीदसि वराकि ! । अब्ध्यानीतै रत्नैस्तवैव भूषा भविष्यन्ति ॥ ४५७ ॥ मन्ये मुधा न भवतां, गृहदास्यं कोऽपि मां विना कुरुते । इत्युल्लुण्ठ इवोचे, स मातुलानपि निषेधयतः ॥ ४५८ ॥ अथ कुण्डीमादायायसीमसौ जलनिधिं ययौ जवनः । किं करकलितकमण्डलुरगस्तिरयमिति जनैर्ध्यातः ॥ ४५९ ॥ दुर्द्धरपूरपरःशतपतयालुसरिज्जलैरपूर्णेच्छम् । कुण्ड्या तया तटस्थः, स वारिधिमुदञ्चितुं लग्नः ॥४६०॥ मुञ्च मणिजालमधुनाऽपि मुच्यसे जलपते ! मया कृपया । इति तर्जयन् स जलधिं, कैः कैर्न विहस्यते स्म जनैः ॥ ४६१ ॥ लोकैरपि स निषिद्धो, जगौ न मे सम्पदं किमु सहध्वम् ? । तावन्नाहं भवतां, दायादो वा विरोधी वा ॥ ४६२॥ एवं त्यक्ताऽ-

न्नोदकमभग्नमनसं च षड्भिरपि मासैः । तं वीक्ष्य वारिधिपतिः, सुस्थितदेवस्तुतोषतराम् ॥ ४६३ ॥ अपवादभीरुणा
तेन तस्य रत्नाकराज्जलं कृषतः । चिन्तारत्नमदर्शयत, दारिद्र्यध्वान्तदिनरत्नम् ॥ ४६४ ॥ जितकाशी तद्रत्नं, मलदि-
ग्धपटच्चराञ्चले वद्धा । वलितः फलितक्लेशः, स तितर्जयिषुर्निषेद्धृजनम् ॥ ४६५ ॥ क्वचन ग्रामे भिक्षालब्धान्ननिर-
स्तचिरतरबुभुक्षः । शिश्ये निशि निद्रागलितचीवरः पान्थकुट्यां सः ॥ ४६६ ॥ पदलग्नं तद्वसनग्रन्थिं पथिको
व्यमुद्रयत्कोऽपि । सुररत्नं चालोकत, दुरासदं भाग्यहीनानाम् ॥ ४६७ ॥ तद्बन्दिमोक्षमाधाय तत्पदे ग्रावखण्डमा-
वध्य । यदलिप्सत तल्लेभे, स ततः सततं समभ्यर्च्य ॥ ४६८ ॥ जागरितस्तरणिकरैः, सोऽपि दरिद्रो गृहीतनिज-
वसनः । प्रेरित इव हर्षोर्मिभिरतीतमार्गो ययौ स्वगृहम् ॥ ४६९ ॥ पत्न्याऽमेलयदखिलांस्तत्र स्वजनानुवाच ताने-
वम् । चिन्तामणिमहमापं, जलधेर्युष्मन्निषिद्धोऽपि ॥ ४७० ॥ अथ तत्पुरतः पश्यति, यावद्ग्रन्थिं विमुद्रय स
वराकः । दारिद्र्यकेलिकन्दुक, इवोपलस्तावदाविरभूत् ॥ ४७१ ॥ भवदुचितोऽयं चिन्ता—मणिर्भवत्येव मा श्लथं
मुञ्च । तैरिति हसितः सगलित—जीवित इव किमपि न जजल्प ॥ ४७२ ॥ स इव क्लेशाल्लब्धं, नरभवचिन्तामणिं
भवाम्भोधौ । नहि मोहनिद्रयाहं, निर्गमयन् हासयिष्ये स्वम् ॥ ४७३ ॥ अवददथ पद्मसेना, प्रिय ! कार्यः प्रासव-
स्तुना तोषः । उच्चतरुशिरसि नो चेत्फलानि दृष्ट्वा स्फुटति हृदयम् ॥ ४७४ ॥ यल्लब्धं तन्मुञ्चन्नलब्धमधिकं नरो
मृगयमाणः । उभयभ्रष्टो भूत्वा, सीदत्यनु स इव गोमायुः ॥ ४७५ ॥ एकः परितः सरितं, मुखविन्यस्तामिषो वने

काऽपि । पङ्किलभूतललीनं, मीनं प्रददर्श गोमायुः ॥ ४७६ ॥ मुक्त्वा स मांसखण्डं, दधाव जलचारिणं जिघृक्षुस्तम् । निममज्ज तिमिर्धुन्यामितः शकुन्या पलं जह्रे ॥ ४७७ ॥ अथ तं व्यथितं हृदये, क्रन्दन्तं जम्बुकं जगौ कोऽपि । तल्लोभोद्रेकविलोकनेन कौतूहली पथिकः ॥ ४७८ ॥ प्रविहाय मांसपेशीं, वदनगतां धावितस्तिमिं धर्त्तुम् । भ्रष्टस्त्वमामिषादनिमिषाच्च किं रोदिषि शृगाल ! ॥ ४७९ ॥ तद्वत्करगतभोगेष्वनादरः सादरश्च शिवसौख्ये । कर्म्मवशेन विघटिते, द्वयेऽपि मा भूः परैः शोच्यः ॥ ४८० ॥ अथ तां जगाद जम्बूः, सुभगे ! क्षेमङ्करी मम त्वमसि । उपदिशसि लब्धपालनमेतत्कस्मै न रोचेत ? ॥ ४८१ ॥ लब्धोऽपि परं धर्मो, विनाश्यते योषिदुक्तिचौरीभिः । ताश्च पराजित्याऽहं, स्यां विद्युन्मालिना न समः ॥ ४८२ ॥ अस्ति गिरौ वैताढ्ये, भूरिशुभं गगनवल्लभं नगरम् । यत्र मणिभवनभित्तिषु, जनबिम्बैर्नैव चित्राणि ॥ ४८३ ॥ खचरौ(रो) विद्युन्माली, मेघरथश्चात्र सोदरावास्ताम् । तौ प्रापतुः कदाचन, मातङ्गीनामवरविद्याम् ॥ ४८४ ॥ परिणीय श्वपचसुतां, श्वपचस्थाने कृताश्रयैः सततम् । वर्षावधि धृतशीलैः, पुम्भिरियं साध्यते विद्या ॥ ४८५ ॥ निर्णीयेति मिथस्तौ, खगाविव तरोर्गिरेरवातरताम् । विहितश्वपाकवेषौ, वसन्तपुरपत्तनमगाताम् ॥ ४८६ ॥ गत्वा श्वपाकपाटकमभजेतां तौ श्वपाककुलवृद्धम् । तेनापि कौ युवामिति, पृष्टौ स्पष्टं न्यगदतां च ॥ ४८७ ॥ आवां श्वपाकनायक—तनयौ जनकापमानतः खिन्नौ । पाटलिपुत्रादत्राजग्मिव नाथं निरीक्ष्य त्वाम् ॥ ४८८ ॥ तौ भक्तौ गुणयुक्तौ, स्वसुताभ्यां स व्यवाहयन्मुदितः ।

अथ मेघरथोऽजिंह्म[1]ब्रह्मधरोऽसाधयद्विद्याम् ॥ ४८९ ॥ अपरस्तु पिकः काकीमिव श्वपाकीमकामयत कामम् । साऽधत्त ततो गर्भं, घनसिक्ता भूरिवाङ्कुरम् ॥ ४९० ॥ वर्षेण सिद्धविद्यो, ज्ञात्वैतत्तं जगाद मेघरथः । सुकुलस्य च सकलस्य च, बान्धव ! तव विप्लवः कोऽयम् ? ॥ ४९१ ॥ सोऽपि त्रपानतमुखः, प्रोचे भ्रातः ! क्षमस्व मम मन्तुम्[2] । अनुने[3]ष्याम्य[4]थ विद्यां, मम चिन्तां वर्षतः कुर्याः ॥ ४९२ ॥ अथ स गतः सुगत इव, ब्रह्मपदं निजपुरं स्मरविजेता । वर्षान्ते ववले स्त्रीबन्धान्निजवन्धुमुद्धर्त्तुम् ॥ ४९३ ॥ तत्र स वन्धुमपश्यद्बालं परिलालयन्तमङ्कस्थम् । पुनरपि तां मातङ्गीमङ्गीकृतगर्भभारां च ॥ ४९४ ॥ मेघरथस्तं न्यगदद्भ्रातः ! किं निस्त्रपोऽसि विकलोऽसि ? । अस्यां नगरश्रोतसि, हंस इव त्वं यदनुरक्तः ॥ ४९५ ॥ सोऽपि जगौ भ्रातर्मे, खलेषु रेखा तवोपकारिषु च । मामीदृग्दशमपि यो, भूयो भूयः प्रबोधयसि ॥ ४९६ ॥ व्रज पुनरेष्याः साधितविद्यं वर्षेण मां समुद्धर्त्तुम् । तेनेत्युक्तः स ययौ, ववले संवत्सरेण पुनः ॥ ४९७ ॥ बालद्वयपालनरतमुदरिण्यां[5] सङ्गतं च मातङ्ग्या । विद्युन्मालिनमालोक्य तस्य दोदूयते स्म मनः ॥ ४९८ ॥ उद्भ्रज्य ततः सगतस्तथा यथा न न्यवर्त्तत च भूयः । तद्वन्नारीवशगो, न खेदयिष्ये गुरूनेषः ॥ ४९९ ॥ ऊचेऽथ कनकसेना, मृतोऽतिकामाद्विचित्र[6]वीर्यनृपः । अतिकोपात्कौरव्या, अत्यभिमानाद्दश[7]ग्रीवः ॥ ५०० ॥ नलभूपोऽतिद्यूतादतिनैस्त्रिंश्याच्च परशुरामोऽपि । अतिलोभाच्च विनङ्क्ष्यसि नाथ ! त्वं शङ्खधमक

१ अदूषित । २ अपराधम् । ३ साधयिष्यामि । ४ आगच्छेः । ५ ' उदरिण्यां मातङ्ग्यां ' इत्यपि । ६ पाण्डवपूर्वजः । ७ रावणः ।

इव ॥ ५०१ ॥ शालिग्रामे ग्रामे, बभूव कौटुम्बिकः पुरा सुभगः । क्षेत्रं स ररक्ष सदा, शङ्खध्वनिना मृगादिभ्यः ॥ ५०२ ॥ अन्येद्युः स निशायां, शङ्खकरो रक्षितुं ययौ क्षेत्रम् । तत्र च निशाऽवसाने, दध्मौ सुप्तोत्थितः शङ्खम् ॥ ५०३ ॥ क्षेत्रमभितो व्रजन्तः, केचिच्चौरा गृहीतधेनुधनाः । तेन ध्वनिनाऽकस्मात्त्रासानारक्षकान् विविदुः॥५०४॥ मुक्त्वा गोधनमखिलं, स्वदेहमपि भारकारि मन्वानाः । ते तत्रसुर्दिशो दिशि, धृत्वा ध्वान्ते वयस्यधियम् [1] ॥५०५॥ प्रातः परितः क्षेत्रं, भ्रमँस्तदैक्षिष्ट गोकुलं सकलम् । स हली गोपविहीनं, लोकमिव स्वैरसञ्चारम् ॥ ५०६ ॥ ग्रामं नीतात्तस्माल्लेभे स धनं यशश्च लोकेभ्यः । लोभात्ततः स नित्यं, क्षेत्रे धमति स्म निशि शङ्खम् ॥ ५०७ ॥ चौरास्त एव यान्तस्तेनैव पथा कदाचिदात्तधनाः । तत्रैव शङ्खशब्दं, श्रुत्वा सत्त्वाधिकाः प्रोचुः ॥ ५०८ ॥ अत्रैव शङ्खनादः, पुराऽभवन्मन्महे ततः स्वधिया । अत्राऽऽसन्नक्षेत्रे, कोऽपि नरः शङ्खधमकोऽस्ति ॥ ५०९ ॥ प्रागपि शङ्खं धमताऽमुना वयं त्याजिता ध्रुवं धेनूः । तद्वध्यो [2] ऽयमिति ध्वनिमनुसृत्य क्षेत्रमीयुस्ते ॥ ५१० ॥ तत्र प्रयत्नतः शङ्खवादिनं तस्करास्तमालोक्य । भङ्क्त्वा शङ्खं चक्रुः, परासुकल्पं [3] घनाघातैः ॥५११॥ चेदकरिष्यल्लोभं, न सोऽधिकं तद्व्यपत्स्यत [4] न चैवम् । तत्त्वमपि लब्धभोगैस्तोषं कुरु किं शिवस्पृहया ? ॥ ५१२ ॥ श्रीजम्बूरवददथो, न भोगसन्तोषयोः प्रिये ! मेलः । नहि भोगान् भुक्तवतः, स्यात्कस्यापीह सन्तोषः ॥ ५१३ ॥ सङ्गो यथा यथा स्यान्मज्जत्यधिकं तथा तथा

१ मित्रमतिम् । २ घातनार्हः । ३ मृतप्रायम् । ४ व्यपत्स्यत विपत्तिं न प्राप्स्यत् ।

जन्तुः । कपिरपि न किं स नष्टः, कुर्वन्नधिकाधिकं सङ्गम् ? ॥ ५१४ ॥ अस्ति गिरिर्विन्ध्य इति, क्रीडासदनं समग्रसत्त्वानाम् । तत्रैकः कपिरभवद्यूथपतिर्ग्लेपित[1]परचक्रः ॥ ५१५ ॥ कोऽपि कपिश्चपलतरस्तद्दयितां वानरीं रह[2]श्चकमे । तज्ज्ञात्वा यूथपतिस्तमधावत्क्रोधनो हन्तुम् ॥ ५१६ ॥ सोऽपि कपिः खीत्कारं, कुर्वाणो ग्रावगोलकान्वर्षन् । पृष्ठस्थापितदयितस्तमनुदधावे क्रुधाविष्टः ॥ ५१७ ॥ न समरकेलीः केनापि शिक्षितौ क्वापि नैव दृष्टचरौ । तौ युयुधातेऽन्योन्यं, सविस्मयं वीक्षितौ व्याधैः ॥ ५१८ ॥ स जरी यूथाधिपतिर्यूनाऽजय्यौजसा जितस्तेन । नश्यन्नातपतापात्पथश्रमाच्चाभवत्तृषितः ॥ ५१९ ॥ विपुलशिलामिलितशिला[3]—जतुनि मुखमवाहयज्जलधिया सः । तत्तत्र लग्नमुद्धर्त्तुमक्षमः सोऽक्षिपत्पाणी ॥ ५२० ॥ तावप्युद्धर्त्तुमथो, चरणौ चिक्षेप तावपि विलग्नौ । स ततः सर्वावयवं, कीलित इव मृत्युमानञ्च[4] ॥ ५२१ ॥ शैलेय[5]रसप्रतिमा, भोगास्तेष्वेवमहमपि विलग्नः । तृष्णाकृतमतिमोहो, न विपत्स्ये[6] वत्सले ! स इव ॥ ५२२ ॥ एवं प्रियासु चतसृषु, चतुरं प्रतिबोधितासु ननु मेने । श्रीजम्बूवीरेणार्द्धभेदितं कामभटकटकम् ॥ ५२३ ॥ भणति स्म नभःसेना, प्रिय ! जाने शिवसुखे धृतानन्दम् । मुनिवृन्दं वीक्ष्य भवानपि ताम्यति तन्मनास्तस्मै ॥ ५२४ ॥ न स्पर्द्धया कृतं स्यात्कार्यं परिणामसुन्दरं प्रायः । अत्रार्थे जरतीयुगदृष्टान्तमुशन्ति[7] किल सन्तः ॥ ५२५ ॥ नन्दिग्रामे सिद्धिर्बुद्धिश्चोभे स्त्रियौ पुराभूताम् । जरसा दारिद्र्येण च,

१ निहतारिबलः । २ कामयाञ्चक्रे । ३ 'शिलाजीत' इति प्रसिद्धिः । ४ प्राप । ५ 'गैरेय' इत्यपि । ६ न मृत्युमाप्स्यामि । ७ वाञ्छन्ति ।

युक्तं समभूत्तयोः सख्यम् ॥ ५२६ ॥ आराधितोऽथ सिद्धया, दारिद्र्यभयार्त्तयानुभावनिधिः । दीनारद्वयम-
नुदिनमदान्मुदा भोलिगो यक्षः ॥ ५२७ ॥ मधुमाधवमाख्यामिव, दीनाराभ्यां जगत्प्रियाभ्यां सा । भेजे जरती
वल्लीपल्लवितेव श्रियं परमाम् ॥ ५२८ ॥ बुद्धिस्तामप्राक्षीदावां सखि ! सन्निभे पुराऽभूव । किं वस्त्राभरणैस्त्वं,
सम्प्रति परिवर्त्तितेवाऽसि ॥५२९॥ उक्ते तया सरलया, यक्षकृते स्वविभवे ततो बुद्धिः। भक्त्याऽऽरराध यक्षं, सिद्धे-
श्चाऽयाचत द्विगुणम् ॥ ५३० ॥ प्रत्यक्षो यक्षोऽदात्तस्यै चतुरः सदा स दीनारान् । सरसीव मृदुसमीरैः, सापि
विलासानशिक्ष्यत तैः ॥ ५३१ ॥ द्विगुणं ततोऽपि सिद्धिर्लेभे नित्यं निषेविताद्यक्षात् । आराद्धो बुद्धेरपि, तद्द्विगुणं
धनमदाद्यक्षः ॥ ५३२ ॥ स्त्रीसङ्कटे निपतितं, विषण्णमिव वीक्ष्य यक्षमथ सिद्धिः । आराध्य बलात्तेन, स्वकमेकम-
काणयच्चक्षुः ॥ ५३३ ॥ परिचर्य ततो बुद्ध्या, गतबुद्ध्या सिद्धितोऽर्थितो द्विगुणम् । तां यक्षश्चक्षुर्युगविकलां चक्रे
विरोधीव ॥ ५३४ ॥ उपचितपुष्कलविभवापि सा ततः प्राप कमपि सन्तापम् । त्वमपि शिवेच्छैर्मुनिभिर्बद्धस्पर्द्धे-
स्तथाऽऽप्तोपि ॥ ५३५ ॥ जम्बूरुवाच मानिनि !, लभते तव वचनपद्धतिः सेयम् । उन्मीलति भविनस्तत्त्वलोचने
पांशुवृष्टितुलाम् ॥ ५३६ ॥ परमपरे ते मुञ्चन्ति सत्पथं ये भवादृशां वचनैः । नाहं मोक्ष्यामि पुनस्तं प्राजनकैः स
वाजीव ॥ ५३७ ॥ अस्ति पुरं साकेतं, सङ्केतस्थानमखिललक्ष्मीणाम् । बाह्यान्तरारिजेता, जितारिरिति तत्र भूपालः
॥ ५३८ ॥ तस्य प्रसादसदनं, जिनदासः श्रावकोऽभवत्तत्र । न्यासीकृतं स राज्ञा, हयरत्नमपालयत्प्रयतः ॥ ५३९ ॥

इभ्यगृहे तस्य हयस्याङ्गोपाङ्गेषु वर्द्धमानेषु । ववृधे नृपस्य सम्पद्विपच्च वैरिक्षितीन्द्राणाम् ॥ ५४० ॥ अन्वहमारुह्य हयं, तं सरसि निनाय नीरपानाय । वलमानश्च जिनगृहे, प्रदक्षिणात्रयमदादिभ्यः ॥ ५४१ ॥ स हयस्थ एव देवं, नत्वागान्निजगृहं ततस्तुरगः । नान्यं विवेद मार्गं, स्वगृहसरोजिनभवनवर्जम् ॥ ५४२ ॥ लग्नोपजिह्वमिव नः, किं राज्यं त्रुटति वैरिभूपालैः ? । इति पृष्टे निजसंसदि, भुवि गूढचराश्चराः प्रोचुः ॥ ५४३ ॥ स्वप्रभुराज्यरसायनमरिकुललक्ष्म्याः क्षयामयः स हयः । यावज्जयति जितारेः, कथमुदयस्तावदपरेषाम् ? ॥ ५४४ ॥ अचिरात्तं तुरगमहं, हृत्वा नेष्याम्यदः प्रतिज्ञाय । प्राज्ञंमन्यः कश्चित्तत्सचिवः प्राप साकेतम् ॥ ५४५ ॥ कपटश्रावकवेषं, कुर्वन्तमशेषजैनबिम्बार्चाम् । साधर्म्मिकवात्सल्याज्जिनदासस्तमनयत् स्वगृहम् ॥ ५४६ ॥ तत्राभ्यर्च्य जिनेन्द्रान्, भुक्त्वा सोऽलीकनियमसंयमितः । जिनदासस्याग्रहतो, निशि तस्थौ धर्म्मवार्त्ताभिः ॥ ५४७ ॥ केनाऽपि तदा सुहृदा, स्वविवाहमहोत्सवे समभ्यर्थ्य । आहूतो जिनदासः, क्षणमासीत्तुरगचिन्तार्त्तः ॥ ५४८ ॥ तं गोप्याद्गोप्यतरं, तुरगं तनयादिकेऽप्यविश्वासी । दत्त्वा कपटश्राद्धस्य रक्षितुं तस्य स चचाल ॥ ५४९ ॥ साध्यं सिद्धं ध्यायन्नथो निशीथे स गोमुखव्याघ्रः । आरुह्य तं तुरङ्गं, स्वपुरमभि प्रेरयामास ॥ ५५० ॥ पूर्वं सरस्ततो जिनमन्दिरमागत्य चतुरगस्तुरगः । चक्रे प्रदक्षिणात्रयमथ निजमन्दिरमुपेयाय ॥ ५५१ ॥ पुनरपि नुन्नस्तेने, तेन हयो भूयसीर्भ्रमीरेवम् । स ननाश तिमिरनाशं, प्रत्यूषेऽश्वं विमुच्य ततः ॥ ५५२ ॥ निखिलनिशाभ्रमिजातक्लेशः प्रविवेश मन्दुरामश्वः । पौरैः

पृष्टश्चेभ्यः, किं निशि वाहस्त्वयाऽवाहि? ॥ ५५३ ॥ चकितः स लोकवचसा, तत्र गतः श्रान्तमश्वमालोक्य। अवगतकितवश्रावकवृत्तः स्वं सुकृतिनं मेने ॥ ५५४ ॥ स्नपयित्वा हर्षाश्रुभिरथाश्वमिभ्यो विशिष्य सचक्रे। स्फुटदृष्टा हि पशोरपि जायन्ते गौरवाय गुणाः ॥ ५५५ ॥ तद्वद्गुरुणाभिहितां, स्वहितां चिद्दर्शनक्रियारूपां। अजहत्त्रिपथीमहमपि, कस्य न मान्यो भविष्यामि ॥ ५५६ ॥ अलपदथो कनकश्रीः, प्राणप्रिय! कृषिरपि क्रमात्फलति। पन्थाः क्रमशो लङ्घ्यः, क्रमशः शैलाग्रमारोह्यम् ॥ ५५७ ॥ गन्तव्यं शिवनगरं, क्रमशः क्रमशो व्रतं ग्रहीतव्यम्। अक्रमकारी त्वरया, परिशोचति पुण्यहीन इव ॥ ५५८ ॥ अस्ति नगरी जयन्ती, निजश्रिया सुरपुरीमपि जयन्ती। शैशवमृतपितृबन्धुस्तत्राभूत्कोऽपि कुलपुत्रः ॥ ५५९ ॥ स च मातुलेन निन्ये, निजगेहे तदपि वह्निना देहे[1]। धूतदेहेवालक्ष्मीस्तेनापि ततोऽयमत्याजि ॥ ५६० ॥ स जगाम तामलिप्तीं, कस्यचिदट्टे स्थितोऽल्पलोभेन। तदपि निशायां पापिषु, परमैः परिमोषिभिरमोषि ॥ ५६१ ॥ तस्य ततोऽदायि जनैरन्वर्थं पुण्यहीन इति नाम। दारिद्र्यभिदे तर्याँ[3] सोऽन्तर्यादःपति[4] विवेश ॥ ५६२ ॥ वव्रले धनलवलाभप्रमनाः स मनाक्तदा च खरवातैः। तत्सङ्गान्मलिनं स्वं, शोद्धुमिवाब्धौ ममज्ज तरी ॥ ५६३ ॥ फलकालिङ्गनतीर्णाऽकूपारः पारमाप्य स कथमपि। कान्तारं कान्तारसमत्तव्यालं[5] व्यलङ्घिष्ट ॥ ५६४ ॥ द्वीप इवारण्याब्धौ, पुरतो वरतोरणे महायतने। यक्षं निरीक्ष्य दौःस्थ्यं,

१ दग्धम्। २ चौरैः। ३ नावा। ४ समुद्रमध्ये। ५ व्यालो दुष्टगजः।

दलयितुमनिशं सिषेवे सः ॥ ५६५ ॥ भक्तिवशस्तं प्रोचे, दयालुहृदयालुनायको यक्षः । एकः केकी नित्यं, नृत्यं पुरतः करिष्यति ते ॥ ५६६ ॥ सौवं[1] सौवर्णमसौ, यत्पिच्छं मुञ्चति व्रजन्नेकम् । वत्स ! तदादद्यास्तन्निवहो हि श्रीकरीभवति ॥ ५६७ ॥ अथ तेन यक्षवचसानुदिनं शिखिपिच्छमेकमाददता । दध्रेऽन्यदा कलापी, समं समस्तानि तान्प्रासुम् ॥ ५६८ ॥ तस्याशुचिकरसङ्करमवाप्य केकी स वायसो जातः । आत्तचरोण्यपि[2] पिच्छानि काकपिच्छत्वमानशुः ॥ ५६९ ॥ सोऽरिचमूमिव कमलामभ्यायान्तीं निषिध्य सर्वत्र । विधिना विहितं निःस्वप्रभावमाभवमनुबभूव ॥ ५७० ॥ एवं त्वमाश्रमादिक्रमलोपात्प्रथममेव तपसि रतः । प्राच्यादपि पुण्यचयात्, च्युतश्चिरं लप्स्यसे दुःखम् ॥ ५७१ ॥ जम्बूरुवाच स क्रममाश्रमविषयं विचारयेच्चतुरे ! । सौहृदमिह निर्व्याजं, यस्य स्यादन्तकेन सह ॥ ५७२ ॥ ये लब्धां सामग्रीं, परिजनमोहेन हारयन्ति जडाः । निविडानुतापतस्तेऽवश्यं क्लिश्यन्ति कमठ[3] इव ॥ ५७३ ॥ कादम्बिन्यस्त्यटवी, *पङ्क्तिशिरःक्ष्माभृदविरलपलाशा । परितोऽमितद्रुरुद्धा लङ्केवाष्टापदनिवासा ॥५७४॥ एकस्तत्रास्ति नदो, बहुयोजनविस्तृतः सदासलिलः । यस्य दृढकुट्टिमायितमूर्ध्वं सेवालपटलेन ॥ ५७५ ॥ तस्यान्तः

१ आत्मीयम् । २ पूर्वप्राप्तानि । ३ कच्छप इव । *पङ्क्तौ श्रेणौ ये शिरःक्ष्माभृतः मुख्यवृक्षा वटादयः, तैः सहाविरलाः सान्द्राः पलाशाः किंशुका अस्यां सा । परितोऽमितद्रुभिः बहुसंख्यवृक्षैः रुद्धा । अष्टापदा हिंस्रजीवविशेषास्तेषां निवासो यस्यां सा । लङ्कापक्षे-पङ्क्तिशब्दो दशसंख्यावाची, तेन पङ्क्तिशिरा रावणः क्ष्माभृद् नृपः, तेन सहाविरला घनाः पलाशा राक्षसा यस्या सा । मितद्रुणा समुद्रेण रुद्धा । अष्टापदनिवासा स्वर्णगृहा ॥

कूर्मोऽभूत्परिष्कृतः पुत्रपौत्रदौहित्रैः । नदकुहरनिलीनत्वाद्विस्मृत इव यो यमस्यापि ॥५७६॥ स कदापि वातदारितशेवालच्छिद्रवर्त्मनोद्ग्रीवः । शारदमिन्दुं वारिदविरहितमुडुमण्डितमपश्यत् ॥ ५७७ ॥ तादृशमदृष्टपूर्व्वी, विस्मयरसनिर्भरं चिरं वीक्ष्य । स्वज्ञातेर्नयनोत्सवमाधातुमधोऽगमत्कमठः ॥ ५७८ ॥ यावत्परिजनयुक्तस्तत्रागात्तावदुरुमरुन्मिलितम् । शैवलपटलमधत्तानुद्घाटकपाटपटिमानम् ॥ ५७९ ॥ आलोडयन्नपि नदं, नासौ तं शशिनमैक्षत वराकः । तद्वत्कुटुम्बमोहाद्गुरुचन्द्रमहं न मोक्ष्यामि ॥ ५८० ॥ ऊचेऽथ कनकवल्ली, न मन्यते यो हितां स्वजनवाचम् । तस्यासन्ना विपदः, खगस्य मासाहसस्येव ॥ ५८१ ॥ ददृशे केनापि नरेणान्तर्वणचारिणा हरिः सुप्तः । तत्कालहतद्विरदामिषसुहितो[1] व्यात्तमुखकुहरः ॥ ५८२ ॥ कोऽपि खगो मासाहसमिति निगदन्मांसलेशलोभेन । प्रविशंस्तन्मुखकूपं, तेन निषिद्धोऽपि न च तस्थौ ॥ ५८३ ॥ जागरितोऽथ हरिस्तं, जीवन्स्तं चपेटया चक्रे । तद्वत्त्वापि दयिताहितोक्तिविमुखस्य नहि कुशलम् ॥ ५८४ ॥ जम्बूर्जगाद सुभगे!, जीवोऽयं रक्ष्यते क्षितेर्येन[2] । बन्धुः स एव हितकृत्किं शेषैरापदि तटस्थैः ॥ ५८५ ॥ न वपुर्न कुटुम्बं वा, शरीरिणो रक्षणक्षमं विपदि । अत्रार्थे मित्रत्रयकथानकं किं न चिन्तयसि ? ॥५८६॥ देशोऽस्ति निरवसानो, भ्रमनिरतानन्तजन्तुसन्तानः । यस्य न लेभे पारः, कैश्चन बहुनापि कालेन ॥ ५८७ ॥ तत्तद्व्यतिकरकीर्णं, तत्रास्ते नरसमुद्रमिति नगरम् । यन्नररत्नोत्पत्त्या, पत्या[3] स्तूयेत देवानाम्

१ 'सहितो' इत्यपि । अर्थस्तु 'तृप्तः' इत्युभयत्रापि । २ हानितः । ३ देवानां पत्या इन्द्रेण ।

॥ ५८८ ॥ तत्रोग्रशासन इति, क्ष्मापो यत्तोषरोषपरतन्त्राः । केऽपि लभन्ते दिव्यामृद्धिं नरकव्यथां केऽपि ॥५८९॥ आपातालसुरालयमाकुन्थुसुरेन्द्रमाजननमरणम् । यस्यादेशं बलिनो, लवतोऽपि न लङ्घते लोकः ॥ ५९० ॥ धनदौस्थ्ययौवनजरासुखदुःखयशोऽयशःप्रमुखमखिलम् । लोकस्य पर्यवस्यति, यस्मिन्नेकप्रभौ जगतः ॥ ५९१ ॥ अमरा अपि नैरयिकास्तेऽप्यमरा द्विजवराः श्वपाकाश्च । तेऽपि द्विजाः क्रियन्ते, येन स्वैरं निजबलेन ॥५९२॥ तस्य सचिवः सचेतन, इति येन स्वप्रभुः प्रभूतधिया । निन्ये वृद्धिमुपायैस्तैस्तैरारम्भसिद्धेन ॥ ५९३ ॥ यः स्वर्गनरकसीमां, भ्राम्यति भूमिं प्रभोः प्रसादेन । न त्यजति तस्य सेवां, तेनैष सुखेऽपि दुःखेऽपि ॥ ५९४ ॥ तस्य बभूव सुरूपः, सुहृदा जन्मोपजातसंयोगः । स्वयमास्ये निक्षिप्तैः, कवलैर्योऽवार्द्धि तेनैव ॥५९५ ॥ तस्य स्नानविलेपनविभूषणाभ्यङ्गभोजनादीनि । स्वसुखायैव सचेतनसचिवो मेने परप्रीतिम् ॥ ५९६ ॥ व्यवहाराभ्यवहारस्थितिगतिशयनं स तेन सह चक्रे । तत्तस्य ददे लौकैरभिधानं नित्यमित्रेति ॥ ५९७ ॥ अन्येद्युश्च दयितया, मतिमत्यावसरमाप्य स प्रोचे । जागर्यते हि पुरुषः, प्रमद्वरो जात्यजायाभिः ॥ ५९८ ॥ योऽयं धव[1] ! तव सवयाः, मन्येऽहं स बहिरेव रमणीयः । अन्तर्मलिनात्माऽयं, त्वयि मयि विघटिष्यते प्रान्ते ॥ ५९९ ॥ आसन्नविपदि काले, मित्रेऽस्मिन्[2] विघटिते परः कोऽपि । भावी न तव सखा किं, लग्नेऽग्नौ खन्यते कूपः ? ॥ ६०० ॥ एकं चक्षुरचक्षुर्मुखे रथे चक्रमेककमचक्रम् । तत्कमपि

१ हे भर्त्तः! । २ मित्रम् ।

सुहृदमपरं, कुरु सम्प्रति यदि हितेच्छुरसि ॥ ६०१ ॥ स प्रेरित इति पत्न्या, मित्रं स्वजनाभिधं विधत्ते स्म । प्रीणाति परप्रणयः, पर्वणि पर्वणि तदाकार्य्य ॥६०२॥ पर्वसुहृदिति प्रथिते, नामनि तस्य प्रियाऽवदद्दयितम् । पूर्वस्मादेप सखा, सुखाय भविता विपत्तौ ते ॥ ६०३ ॥ अयमपि न पुनः सम्यक्, प्रभविष्यति रक्षितुं क्षितिं नाथ ! । स्वाराधमचलसौहृदमग्र्यबलं तत्कुरु सखायम् ॥ ६०४ ॥ स च विश्वहितः श्रीमान्, सुलभः प्रायेण साधुशालासु । इति तद्वचसा चक्रे, तमेव मित्रं महामात्यः ॥ ६०५ ॥ अध्वनि दृष्टं नमति, ध्यायति सद्भावपूर्वकं तं सः । स च तावतापि तुष्यति, भावग्राह्या हि वरसुहृदः ॥६०६ ॥ स ततः प्रणाममित्राख्यया जनैरौच्यताच्युतस्नेहः । एवं मित्रत्रययुग्, निजं स जन्म व्यतीयाय ॥६०७॥ स कदाचन यमकल्पे, नृपतौ कुपिते जगाद सहमित्रम् । मित्र ! त्वय्येव मया, न्यस्तमभूत्प्रेमसर्वस्वम् ॥ ६०८ ॥ विपदि तदुपस्थितायामस्यां साहाय्यमारचय्य मम । अवदातमर्ज्जय यशः, पुनः पुनर्नेदृशोऽवसरः ॥ ६०९ ॥ श्रुतमप्यश्रुतमिव तद्वचनं कृत्वा धृतावहेल इव । तूष्णीको नित्यसुहृद्व्यपतदचेष्टो महीपीठे ॥६१०॥ परिवृत्ते सहमित्रे, म्लानास्यमनौजसं सचिवधुर्यम् । अवगतराजविरोधस्तमवदद्भ्येत्य पर्वसखः ॥ ६११ ॥ मित्र ! विपीदसि कस्माद्धनेन देहेन वा यतिष्येऽहम् । किं क्रियते ? भूपोऽयं, स्वैराचारो दुराराधः ॥ ॥ ६१२ ॥ उपकारास्तव वहवस्तेषामनृणः कथं भविष्यामि ? । श्रुत्वेति नित्यमित्रात्पर्वसखममुं स वहु मेने ॥६१३॥ तस्मिन्नथ यतमाने, प्रवर्द्धमाने भये च भूमिपतेः । आगात्प्रणामसवयाः, सावष्टम्भं जगादेति ॥ ६१४ ॥ मित्राग-

तोऽस्मि सोऽहं, त्वत्पत्न्या प्रेरितोऽद्य मतिमत्या । किं शोचसि? मयि निकटे, प्रभविष्णुर्विष्णुरपि न स्यात् ॥६१५॥
वर्षन्ति ममादेशाज्जलदाः सीमां भिनत्ति न च जलधिः । प्रादुर्भवन्ति निधयः, स्फुरन्ति मणिमन्त्रमहिमानः ॥६१६॥
दुःस्था अपि धनवन्तः, कुधियोऽपि बुधा मृगा अपि व्याघ्राः । रङ्का अपि चक्रधरा, मया यथेच्छं विधीयन्ते ॥६१७॥
मा धा मनसि यदस्मै, न चकर[1] कश्चन कदापि सत्कारम् । नाहं भाटकवश्यो, वश्योऽहं शुद्धभावानाम् ॥ ६१८ ॥
भावस्तवाऽपि शुद्धः, स्यामद्य तवाऽनृणः प्रणामस्य । एह्येहि नयामि त्वां, सदयितमनुपद्रवं स्थानम् ॥ ६१९ ॥
विश्वहितं स्वहितं तं, सोऽपि पुरस्कृत्य सप्रियः प्रचलन् । तस्मादेशाच्चक्रे, वासकममरालये क्वचन ॥६२०॥ तमचा-
लयत्ततोऽपि, प्रणतिसखो घनसुखावगाढमपि । नहि राजविरुद्धानां, स्थितिरेकत्रोचिता प्रायः ॥ ६२१ ॥ पुनरपि
पदं गमयितुं, तं मूलपुरं निनाय विश्वहितः । तत्राप्यभुङ्क्त भोगान्, सचिरं तस्यानुभावेन ॥ ६२२ ॥ मा ज्ञासीदत्र
स्थितमेतं नृपतिश्चरैरिति वयस्यः । परिवर्त्तितवेषं तं, प्रयतं सार्थेशमुपनिन्ये ॥ ६२३ ॥ सार्थेशस्तमवादीद्वत्स! सभा-
ग्योऽसि यस्य सुहृदेषः । वयमप्यस्यैव बलात्कुप्रभुमेतं मुमुक्षामः ॥ ६२४ ॥ मा भूः कदापि विमुखोऽमुष्य त्याज्यो
न जातु सार्थोऽयम् । उत्तिष्ठेते पथि यौ, व्याघ्रौ ताभ्यां न भेतव्यम् ॥ ६२५ ॥ दवशैलवंशजालीगर्त्ता गत्यन्तराय-
मिह ये स्युः । ते प्रशममार्दवार्जवसंवरमन्त्रैः सुखं वार्याः ॥ ६२६ ॥ न च सच्छाये विपिने, स्थेयं जेयं बलेन चौर-

१ अहं न चकर, नाऽकरवमित्यर्थः ।

वलम् । लब्धासेऽभिमतपुरं, शिक्षामेतां वहन् वीर! ॥६२७॥ सोऽपि तदादेशरतः, सरलेन यथा तथा चचालाथ। येनातीतारण्यो, निर्विघ्नं प्राप शिवनगरम् ॥ ६२८ ॥ विश्वहितस्तमवादीन्मित्र! तदेतत्पुरः पुरं पश्य । यत्रोग्रशासननृपान्निवसन्त्यकुतोभया लोकाः ॥ ६२९ ॥ नित्ययुवा मृत्युभवातङ्कविमुक्तः सहानया पत्न्या । कालमनन्तमिह त्वं, भुञ्जीथा निस्तुपं सौख्यम् ॥ ६३० ॥ अथ तत्र पुरे प्रवरे, प्रवेश्य तं वन्धुमनुपधिस्नेहः । विश्वहितोऽवलत यतस्तस्योद्धार्य्यं जगन्निखिलम् ॥ ६३१ ॥ श्रृणु सुदति! कथातत्त्वं, देशोऽयं संसृतिः पुरं नृभवः । राजा कर्म्मविपाकः, सचिवो जीवः प्रिया बुद्धिः ॥ ६३२ ॥ तनुपरिजनधर्म्माख्यं, क्रमेण मित्रत्रयं यथोद्दिष्टम् । नृपकोपो मृत्युदशा, तस्मात्त्राणं न देहेन ॥ ६३३ ॥ देहेऽनुपलक्षित इव, निश्चेष्टीभूय मञ्चकारूढे । समुपैति वन्धुवर्गो, धनेन वचनेन यतमानः ॥ ६३४ ॥ तदपि प्रवर्द्धमाने, मृत्युभये चालितः स धर्म्मेण । वासकमेकं कुरुते, दिवि जीवो नृभवमेति पुनः ॥ ६३५ ॥ सार्थो गणस्तदीशः, सुगुरुर्दीक्षा च वेषपरिवर्त्तः । उपदेशास्तच्छिक्षा, रागद्वेषौ पथि व्याघ्रौ ॥ ६३६ ॥ वार्याः प्रशमादीनां, दवादयो येऽत्र ते किल कषायाः । विषयाः सच्छायवनं, परीषहाश्चौरसेना च ॥६३७॥ मोहोऽरण्यं मोक्षः, पुरमिष्टं विद्धि तन्वि! तेनाहम् । देहकुटुम्बस्नेहं, विहाय निषिषेविषे धर्म्मम् ॥६३८॥ ऊचे ततो जयश्रीरेवमलीकैः स्वचित्तसङ्कल्पैः । प्रिय! ऋजुहृदयाः कस्मादस्मान् वञ्चयसि चट्ट इव ॥ ६३९ ॥ ग्रामे

१ श्वस्तन्या युष्मदर्थैकवचने रूपम् । लप्स्यसे इत्यर्थः । २ निष्कपटस्नेहः । ३ यत्नं कुर्वाणः । ४ (धर्म) सेवितुमिच्छामि ।

कौशिकनामनि, चट्टोऽजनि तापसो महामूर्खः । भस्मोद्धूलननिरतस्य यस्य वाचोऽपि किल रूक्षाः ॥६४०॥ मोदक-
निकरनिरुद्धं, स्वप्ने स्वमठं निरीक्ष्य बुद्धेन । पशुजित्वरजडिमानः, प्रातस्तेनोचिरे शिष्याः ॥ ६४१ ॥ वत्साः ! शृणुत
जनानां, गृहेषु वयमाप्नुमः सदा भिक्षाम् । न तु सामग्रीन्यूनैरस्माभिर्भोजितः कोऽपि ॥ ६४२ ॥ सञ्जातशक्तिरद्य,
स्वैरं सन्तर्प्य लोकमखिलमपि । पङ्क्तौ निवेशयिष्ये, स्वं बलिकर्णाद्युदाराणाम् ॥ ६४३ ॥ तद्रचयत शुचिमण्डपमा-
ह्वयत द्रुतमशेषमपि लोकम् । इति तेनोक्ताः शिष्या, वितेनिरे तत्तथा सर्वम् ॥ ६४४ ॥ अथ विस्मयादकस्मान्मि-
लिते लोके क्रमान्निषण्णे च । पुरतः स्थालेषु निवेशितेषु शिष्याञ्जगौ चट्टः ॥ ६४५ ॥ हंहो विमृश्यते किं ?, मठो-
दरान्मोदकान् समानयत । तर्प्पयत कङ्कुकोद्रवधान्यरसज्ञं च जनमेतम् ॥ ६४६ ॥ तेऽपि विवृत्य द्वारं, परमोदक-
शून्यमन्तरैक्षन्त । तं जीर्णकूपमिव मठमेतद्गुरवे निजगदुश्च ॥६४७॥ चट्टः सभ्रूभङ्गं, जगाद रे मूर्खशेखराः ! स्वपित ।
येनैतानीक्षध्वे, दृष्टाः स्वप्ने मयाप्येते ॥ ६४८ ॥ श्रुत्वेति जनाः कृत्वा, कलकलमुत्तालतालदानेन । निजसद्म ययु-
र्मुक्त्वा, मोदकगर्द्धिं बुभुजिरे च ॥ ६४९ ॥ तं स्वमतिशिल्पिकल्पितभोजनदानाद्यथा जहास जनः । तद्वदलीक-
सुखाशां, तन्वंस्त्वमपि प्रभो ! मा भूः ॥ ६५० ॥ जम्बूरवदद्दयिते !, किं त्वां कलुषयति विषयतृष्णेयम् । स्मरति न
किं ते गर्भान्धकूपवासव्यथा विदुषि ! ॥६५१॥ त्रस्यन्ति त्रिदशा अपि, यस्मात्तं गर्भकूपमुन्मुच्य । किं तत्र पुनः पित्संसि[1],

१ पतितुमिच्छसि ।

॥ २६ ॥

तुच्छमतिः स इव ललिताङ्गः ॥ ६५२ ॥ सुमनःश्रेणीसारं, पुरमस्ति वसन्तवद्वसन्तपुरम् । चित्रं यत्र न गोपतिकराः कठोरत्वमभजन्त ॥ ६५३ ॥ निशितायुधरसिको युधि, शतायुधस्तत्र समभवद्भूपः । तस्य वधूर्नवयौवनवलदुर्ललिता ललितदेवी ॥ ६५४ ॥ वातायनस्थिता सा, कदाचिदैक्षिष्ट मदनमिव साङ्गम् । ललिताङ्गं नगरान्तः, समुद्रदत्तेभ्य-कुलतिलकम् ॥ ६५५ ॥ दुर्वलगवीव पङ्के, तद्दृष्टिस्तस्य वर्ष्मणि निमग्ना । अज्ञायीङ्गितविज्ञा, न चतुरया चतुरिका सख्या ॥ ६५६ ॥ सरसां सच्छायान्तामालोक्य चिरं स्थितो युवा सोऽपि । मरुपान्थः सरसीमिव, सहकारलता-मिवान्यभृतः ॥ ६५७ ॥ वनमानञ्च कदाचन, विलोकितुं कौमुदीमहं नृपतिः । तस्थौ लब्धावसरा, शिरोर्त्तिदम्भेन राज्ञी च ॥ ६५८ ॥ आनीतः सोऽपि युवा, कामप्रतिमाच्छलेन चतुरिकया । चिरविरहतापमसुचद्राज्ञीतनुसरसि रममाणः ॥ ६५९ ॥ रतिलुलिते ललिताङ्गेऽर्थ सौविदैः कोविदैर्मनाक्ककितैः । ऊचे कृतवनकेलिस्तदैव नृपतिः समायातः ॥ ६६० ॥ दयिता पतिव्रता ते, वयमपि न च्छलदृशः प्रजापाल ! । परमन्तःपुरमीक्षितुमर्हसि दददभ-यमस्मासु ॥ ६६१ ॥ निःशब्दं सिद्ध इवाययौ तदन्तःपुरं महीनाथः । द्वारे च दत्तदृष्टिर्न्यवेदयच्चतुरिका राज्यै ॥६६२॥ गतकामा कामपि भियमन्तर्दधती सखीयुता राज्ञी । चिक्षेप दृषदमिव तमशुचिकूपे जालमार्गेण ॥६६३॥ कृमिकुलसङ्कुलमिचिकिलपिच्छिलमुत्तालवमनलालौघम् । प्रासः स कूपगर्भं, ययौ तुलामशुचिकीटस्य ॥ ६६४ ॥

१ गोपतिः सूर्यः पक्षे राजा, तस्य कराः किरणा देयभागाश्च । २ 'अत्र' इत्यपि । ३ मिचिकिलः कर्दमः ।

प्रतिदिवसमसौ राज्या, भुक्तविमुक्तेन भक्तनीरेण । स्वस्य प्राणाधारं, कुर्कुर इव कल्पयामास ॥६६५॥ भोक्ष्ये भोगा-
नस्मान्मलकूपान्निर्गतो न पुनरेषः । विमृशन्निति नारकवज्जिजीव स च जीवितोद्विग्नः ॥ ६६६ ॥ प्रावृषि जलध-
रसलिलैः, प्रवाह्य मलकूपतस्ततोऽनायि । कचवर इव नगराद्बहिरपौरुषः स परिखामध्यम् ॥ ६६७ ॥ सलिलोच्छू-
नशरीरः, क्षिप्तः परिखातटे स वीचीभिः । तत्रागतया धात्र्या, ददृशे सत्कर्म्मदशयेव ॥ ६६८॥ ज्ञातः शरदेव तया,
नीतः स्वगृहं स हंस इव कमलम् । अभवत्पुनर्नवीनः, स्नानाद्यैर्लालितो ललितः ॥ ६६९ ॥ तं पुष्टाङ्गं दृष्ट्वा, कदापि
राज्ञी स्मरातुरा सैव । यद्याह्वयति तदा किं, युक्तं गन्तुं निषेद्धुं वा ॥ ६७० ॥ जानाति मन्दधीरपि, न तस्य तत्रो-
चितं पुनर्गमनम् । इति ताभिः सममुक्ते, जगाद जम्बूः कथातत्त्वम् ॥ ६७१ ॥ योऽयं किल ललिताङ्गः, स ज्ञेयो
भोगलोलुपः प्राणी । विषयसुखं मुखमधुरं, नृपाङ्गनाभोगसममत्र ॥ ६७२ ॥ कूपे वासो गर्भे, स्थितिर्विघसभोजनं
च यत्तस्य । जननीभुक्तान्नोदकरसनिस्यन्देन सा वृत्तिः ॥ ६७३ ॥ यत्कूपतलात्कथमपि, निर्गमनं जन्म तत्परि-
ज्ञेयम् । यत्परिखावस्थानं, वासोऽसौ सूतिकाभवने ॥ ६७४ ॥ या धात्री सा विश्वोपष्टम्भकरी सुकर्म्मणां स्फातिः ।
परिपाल्य यया क्रियते, जीवोऽयं यौवने सुभगः ॥ ६७५ ॥ तन्नामगर्भकूपावस्थानविडम्बनाः स्मरंस्तास्ताः । विषयो-
पभोगगृद्धिं, सचेतनः कः पुनः कुरुते? ॥ ६७६ ॥ सति संयमपीयूषे, विषयेषु रमेत कः सुधीरत्र । क्षारोदकमिव

१ 'परिखावटे' इत्यपि ।

भुक्ताः, प्रत्युत जनयन्ति ये तृष्णाम् ॥ ६७७ ॥ तस्माद्गतस्य विषयव्रातस्य विपाकमाकलय्य हृदि । यत्स्यादायति हृद्यं, तदेव सेवध्वमिद्धधियः ॥ ६७८ ॥ तेन प्रबोधिता इति, ताः प्रोचुः प्रिय! जितं जितं भवता । यदि वा दिवान्धवध्वः[1], स्पर्द्धन्ते किं दिनकरेण? ॥ ६७९ ॥ आश्रीयत यः पन्थास्त्वया प्रियास्माभिरपि हि संश्रेयः[2] । न क्वचन पृथक् पान्थाः, शकटस्य च शकटिकानां च ॥ ६८० ॥ मुक्त्वास्मानष्टौ द्रुतमेकामेकान्ततो वुवूर्षसि[3] याम् । तामद्य सपत्नीमपि, वयं दिदृक्षामहे मुक्तिम् ॥६८१॥ अबला मन्थरगतयस्त्वामेकं शरणमभ्युपेताः स्मः । तद्ग्राह्याः शिवमार्गे, प्रतीक्ष्यपादाः[4]! प्रतीक्ष्य वयम् ॥६८२॥ प्रभवोऽभ्यधत्त जम्बूकुमार! सुकुमार! मारसारहर! । वीक्ष्येदं तव चरितं, चौरा अपि चमदकुर्म[5] वयम् ॥ ६८३ ॥ सबला गजास्ततोऽपि, क्षुधा ततः कणगणस्ततोऽपि शिला । यत्पुत्रबला[6]दबलास्तं सकलं शकलयन्ति किल ॥ ६८४ ॥ लोहं ततस्ततोऽग्निस्ततोऽपि मेघस्ततश्च घनपवनः । तस्माच्च दीर्घजिह्वस्ततो गरुत्मांस्ततो विष्णुः ॥ ६८५ ॥ तस्माच्चक्री तस्मात्रिदशा इन्द्रस्ततस्ततः कामः । तं च जयतस्तव भुजस्था[7]मोपमिमीमहे केन? ॥ ६८६ ॥ तव सुरसरितेव गिरा, ममापि खलु विषयतृष्णया गलितम् । शान्तं च मोहरजसा, मनसा हंसेन मुदितं च ॥ ६८७ ॥ अहमपि पृष्ट्वा बन्धूनादास्ये व्रतमितीरयन् प्रभवः । मा प्रतिबन्धं कार्षीरिति

---

१ उलूकाः । २ आश्रयणीयः । ३ परिणेतुमिच्छसि । ४ पूज्यचरणाः । ५ चमत्कारं प्राप्ताः स्मः । ६ यस्याः शिलायाः पुत्राः पेषण्यादयः खण्डनसामग्री, तद्बलात् । ७ बाहुबलम् ।

तेनोक्तश्च निरियाय ॥ ६८८ ॥ जम्बूरिव मोहभरं, हरंस्तमोऽथाऽहिमांशुरुदियाय । व्रतनिश्चयमज्ञासिषुरस्य श्वशुराश्च पितरौ च ॥ ६८९ ॥ वाल्येऽपि तद्व्रतास्थां, निरीक्ष्य तेऽपि व्रतार्थमयतन्त । नहि वर्त्मकर्षके सत्येकस्मिन् दुर्लभः सार्थः ॥ ६९० ॥ स्नपितस्ततः स रेजे, स्वर्णमयैः स्वर्णसां भृतैः कलशैः । जितमदनत्वाद्धरभटजातौ जाताभिषेक इव ॥ ६९१ ॥ सबलान्तरङ्गरिपुबलमस्यैव बलेन मम सुजेयमिति । निजदेहं वीरमिव, व्यलेपयचन्दनेनासौ ॥ ६९२ ॥ अन्तर्ज्वलतो ध्यानानलस्य तेजोभिरिव बहिःस्फुटितैः । भूरिमयैराभरणैर्भूरिभिरभितो व्यभूष्यत सः ॥ ६९३ ॥ कलपरिमलमिलदलिकुलकलकलवाचालमालभारी सः । विरराज सह वहन्निव, जितमन्मथमुक्तशस्त्राणि ॥६९४॥ हन्तुमिव कटुविपाकश्वपाकतुलपापपटलमालिन्यम् । क्षीरोदधिकल्लोलैर्वासोभिरशोभि तस्य वपुः ॥ ६९५ ॥ शिवनगरगमनविद्यां, साधयतो मेऽस्तु मङ्गलमितीव । आनर्च स जिनराजं, निर्व्याजं तत्तदुपहारैः ॥ ६९६ ॥ सर्वैः श्रिया विमुच्येत तां च मोक्ष्याम्यहं पुनः प्रसभम् । अव्ययदिति धनमखिलं, सदानवीरो नवक्षेत्र्याम् ॥ ६९७ ॥ शिवगृहसोपानमिवानुपमानं याप्ययानमारूढम् । तमवेष्टयदेकमनाः, क्षणात्पितृश्वशुरवर्गोऽपि ॥ ६९८ ॥ मूर्त्तस्येव चरित्रस्य वामपार्श्वे धृतासनास्तस्य । अष्टौ प्रवचनमातर, इव व्यराज्यन्त दयितास्ताः ॥ ६९९ ॥ मदने जिते तदनु-

१ स्वर्णसा शोभनजलानाम् । २ सौवर्णैः । ३ मालेषीकेष्टकस्याऽन्तेऽपि भारितूलचिते ।२।४।१०२। इति मालाशब्दस्य भारिशब्दे परे ह्रस्वः । मालां भर्तुं शीलमस्येति मालभारी, ताच्छिल्यिको णिनिः । उपपदसमासः ।

गैर्घनैः स विद्युद्भिरासिषेवे सः । भीतैरिव नवकाञ्चनमयदण्डश्रीकरीमिषतः ॥ ७०० ॥ नाटकपाटप्रकटितपटुपटहध्वानवधिरितदिगन्तम् । ऋभुणाऽनादृतनाम्ना, कृतनिष्क्रमणोत्सवाभोगः ॥७०१॥ शुश्रुम वयं पुराणा, न पुराणादिष्वपीदृशं क्वचन । इति पौरगिरः शृण्वन्, वन्दिभिरभिवर्ण्यकामजयः ॥ ७०२ ॥ कनकैरर्थिषु वर्षन्, शृण्वन्नाशीर्वचांसि पौरीणाम् । तद्वनमवाप जम्बूर्यत्रास्ते श्रीसुधर्म्मगुरुः ॥ ७०३ ॥ त्रिभिर्विशेषकम् ॥ तच्चरितं विश्वत्रयविलक्षणं वीक्ष्य यौवने तस्य । अधुनत सविस्मया इव, मौलीन्मरुदीरितास्तरवः ॥७०४॥ निजनिजनीडनिलीनास्तच्चरितं भावयन्त इव मनसा । विहगा अपि मौनजुषः, प्रीत्या ददृशुस्तमायान्तम् ॥ ७०५ ॥ निर्मुक्तयाप्ययानः, सपरिकरो व्रतविलम्बभीरुरथ । दत्तप्रदक्षिणात्रयमभिनम्य गुरुं जगौ जम्बूः ॥ ७०६ ॥ रत्नाकरं भवन्तं, दौर्गत्यभयादहं प्रपन्नोऽस्मि । चारित्रं चिन्तामणिमिव दत्त्वा तत्प्रसीद विभो! ॥ ७०७ ॥ जिनमतसरसि रसाढ्यं, पिवतः समयामृतं[1] सतृष्णस्य । मम तव पादच्छाया, छायाद्[2]भवसम्भवं तापम् ॥ ७०८ ॥ प्राग्वत्तदापि मुक्ताभरणं[3] विकचाननं[4] श्रुतार्थरसम् । सपरिकरं गुरुरन्तःप्रमदी तमदीक्षयन्मङ्क्षु ॥७०९॥ मृतयोः पित्रोर्भक्ताः, सुता अभक्ताश्च जीवतोः प्रायः । स्वस्य शमराज्यहेतुं, शशंसतुस्तं ततः पितरौ ॥ ७१० ॥ प्रायः श्वशुरकुलश्रीसरितां ग्रीष्मातपो हि जामाता ।

१ सिद्धान्तपीयूषम् । २ 'छो छेदने' इति धातोराशिषि रूपमिदम् । छिद्यादित्यर्थः । ३ तदा दीक्षासमये मुक्ताभरणं त्यक्तभूषणमपि प्राग्वत् पूर्ववत् मुक्ताभरणं मौक्तिकभूषणम् । ४ तदा विकचाननं विगतकेशमुखमपि प्राग्वद् विकचाननं प्रसन्नमुखम् । अन्यत्स्पष्टम् ।

दत्ते नः शमनिधिमयमिति स श्वशुरानमोदयत ॥ ७११ ॥ भर्त्तामरणैर्भार्यो, भवोदधौ भारयन्निमज्जयति । तारयते नः पुनरयमिति जहृषुस्तस्य पत्न्योऽपि ॥ ७१२ ॥ सायं दीपद्युतिरिव, घनवृष्टौ वाहिनीप्रवाह इव । वरभुवि वृक्षाङ्कुर इव, तस्य तदाप्यायि संवेगः ॥ ७१३ ॥ सन्ततमनङ्गसङ्गतमाचक्रामोचितं स मोहनृपम् । आसीद्गुरुप्रसत्त्या, स हि सबलो द्वादशाङ्गेषु ॥ ७१४ ॥ स चतुर्दशभिः पूर्वैं, रत्नैरिव निधिसमैश्च नवतत्त्वैः । संयुक्तो युक्तमधात्क्षमाभृतां[1] चक्रवर्त्तित्वम् ॥ ७१५ ॥ प्रभवः पृष्टस्वजनोऽन्यदा प्रवव्राज गणधरमुपेत्य । शिष्यत्वेन स तेनाप्यदायि जम्बूमुनीन्द्राय ॥ ७१६ ॥ श्रीवीरे मोक्षगते, विंशत्यब्दैः[2] सुधर्मगणराजः । समभूत्केवलकमलालीलागृहममलकीर्तिभरः ॥७१७॥ अष्टौ समास्ततोऽभूद्युगप्रधानः प्रधानगुणकलितः । निश्चिन्त इव शिवश्रियमभजद्दत्वा गणं तस्मै ॥ ७१८ ॥ वीरतीत्य वीरप्रभुनिर्वाणात्समाश्चतुःषष्टिम् । प्रभवं श्रुतकेवलिनं, चक्रे गणभारधौरेयम् ॥ ७१९ ॥ समये त्रिजगन्नताविनतांह्रियुगस्य केवलज्ञानम् । निर्वृतिपथप्रदीपं, तस्योत्पेदे तमोभेदि ॥ ७२० ॥ सत्यं स्याद्वणिजां परीक्षणकला जम्बूकुमारोऽत्यजज्जाया अष्ट मनोहरा अपि वहिर्यन्मुक्तिकान्ताकृते । चक्रे सापि कृतज्ञतोचितमिमं प्राप्यैकचित्तं वरं, नान्यं कञ्चन भारते नरमसौ वव्रे यतस्तद्दिनात् ॥ ७२१ ॥ ॥ इति श्रीजम्बूस्वामिचरित्रं समाप्तम् ॥

१ क्षमाभृतां सुहृन्शीलानां, राज्ञां च । २ दशभिर्वर्षैरित्यपि । क्वचित्तु द्वादशवर्षैरिति पाठो दृश्यते ।

Published by Vallabhadas Tribhuvandas Gandhi, Secretary, Sri Jain Atmanand Sabha, Bhavanagar, and
Printed by B. R Ghanekar at the Nirnaya-sagar Press, 23, Kolbhat Lane Bombay.

पं० श्री मुक्तिविमलजी जैनग्रन्थमाला ग्रन्थाङ्क ७

जगत्पूज्य-क्रियोद्धारक-सूरिपुरन्दर-श्रीमद् ज्ञानविमलसूरिविरचितवृत्त्युपेतम्

# प्रश्नव्याकरणसूत्रम्

प्रकाशकः—मुक्तिविमलजैनग्रन्थमाला व्यवस्थापकः—शांतिलाल हरगोविंददास
देवीशाहनो पाडो अमदावाद